

ग्रंथकार: पंडित विष्णु नारायण भातखंडे,
बी ए, एल्एल् बी.
( " चतुर पंडित )
जन्म–गोकुळाष्टमी शके १७८२
ता. १० आगस्ट १८६०

श्री.

श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुभ्योनमः

# अथ श्रीमल्लक्ष्यसंगीतप्रारंभः ।



## । मंगलाचरणम् ।

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् ।
सर्वविघ्नोपशान्त्यर्थं लक्ष्यसंगीतमारभे ॥ १ ॥

श्रीब्रह्माद्यैरर्चिता या सुरेंद्रै-
भक्तिश्रद्धाभावयुक्तैः सदैव ।
प्राचीनार्वाचीनसंगीततत्त्व—
स्फूर्त्यै तां श्रीशारदां नौम्यभीष्टाम् ॥ २ ॥

श्रीसद्गुरोस्तस्य पदारविंद—
द्वंद्वं तमोनुत्तय आशु वंदे ।
यस्यानुकंपा सहसैव मूकं
करोति वाचालमिति प्रथेयम् ॥ ३ ॥

संगीतपूर्वसूरीणां महतामप्यनुज्ञया ।
धैर्यमालंब्य कुर्वेऽमुं प्रबंधं स्वान्तशुद्धये ॥ ४ ॥

---

## प्रथमाध्यायः ।

अथ श्रीलक्ष्यसंगीतप्रथमाध्याय ईर्यते ।
चतुराख्येन भरतपूर्वखंडनिवासिना ॥ ५ ॥
निर्मथ्यातिप्रयत्नेन मतभेदपयोनिधिम् ।
चतुराभिमतां वक्ष्ये हिंदुस्थानीयपद्धतिम् ॥ ६ ॥

प्रणाल्यौ तु प्रसिद्धे द्वे संगीतस्य विदां मते ।
आद्या कर्णाटकी ख्याता हिंदुस्थानी तथापरा ॥ ७ ॥

कर्णाटकप्रणाली या सा मद्रासनिबंधिनी ।
अन्यत्र सर्वतो हिंदुस्थानीया बहुसंमता ॥ ८ ॥

तत्र तत्र प्रदेशेषु वैमत्यं संभवेत्क्वचित् ।
सामान्यतस्तु सैकैव पद्धतिर्विदुषां मते ॥ ९ ॥

---

## संगीतम्

गीतं वाद्यं तथा नृत्यं त्रयं संगीतमुच्यते ।
मार्गदेशीविभागेन संगीतं द्विविधं मतम् ॥ १० ॥

मार्गो देशीति तद्द्वेधा तत्र मार्गः स उच्यते ।
यो मार्गितो विरिंच्याद्यैः प्रयुक्तो भरतादिभिः ॥ ११ ॥

देवस्य पुरतः शंभोर्नियताभ्युदयप्रदः ।
देशे देशे जनानां यद्रुच्या हृदयरंजकम् ॥
गानं च वादनं नृत्यं तद्देशीत्यभिधीयते ॥ १२ ॥

संगीतरत्नाकरे ॥

गीतं वाद्यं नर्तनं च त्रयं संगीतमुच्यते ।
मार्गदेशीविभागेन संगीतं द्विविधं मतम् ॥ १३ ॥

द्रुहिणेन यदन्विष्टं प्रयुक्तं भरतेन च ।
महादेवस्य पुरतस्तन्मार्गाख्यं विमुक्तिदम् ॥ १४ ॥

तत्तद्देशस्थया रीत्या यत्स्याल्लोकानुरंजनम् ।
देशे देशे तु संगीतं तद्देशीत्यभिधीयते ॥ १५ ॥

संगीतदर्पणे ॥

गीतं द्वेधा मार्गो देशी मार्गः स यो विरिंच्याद्यैः ।
अन्विष्टो भरताद्यैः शंभोरग्रे प्रयुक्तोऽर्च्यः ॥ १६ ॥

देशे देशे रुच्या यज्जनहृद्रंजनं तु सा देशी ।
स तु लोकरुचिविकलितः प्रायो लक्ष्यात्र देशी तत् ॥१७॥

रागविबोधे ॥

अबलाबालगोपालैः क्षितिपालैर्निजेच्छया ।
गीयते यानुरागेण स्वदेशे देशिरुच्यते ॥ १८ ॥

संगीतदर्पणे ॥

मार्गितं प्रथमाचार्यैर्निबद्धं नियमोत्तमैः ।
अतिशुद्धस्वरूपं तत् सांप्रतं नैव गोचरम् ॥ १९ ॥

व्यवहारेऽधुना यत्तु संगीतं परिदृश्यते ।
तत्सर्वं देशिसंज्ञं स्यादित्याहुर्लक्ष्यवेदिनः ॥ २० ॥

टिप्पनी ।

ग्रंथेषु तु पुराणेषु श्रेष्ठो रत्नाकरो मतः ।
तत्राप्यंगीकृतं देश्याः प्राधान्यं शास्त्रकारिणा ॥ २१ ॥

पूर्वप्रसिद्धसंगीतं प्रसिद्धमधुना च यत् ।
द्विविधं वर्णितं तत्र संगीतं सुपरिस्फुटम् ॥ २२ ॥

शार्ङ्गदेवस्य कालेऽपि संगीतं देशिसंज्ञितम् ।
आसीत्प्रचलितं लोक इति तर्कयितुं क्षमम् ॥ २३ ॥

शार्ङ्गदेवानुगाश्चापि तद्विनिर्मितपद्धतिम् ।
यथायोग्यप्रमाणेन नैवज्ञातुमशक्नुवन् ॥ २४ ॥

चतुर्दंडिप्रकाशाख्ये ग्रंथे व्यंकटपंडितः ।
प्राचीनरागविषये सुस्पष्टमिदमब्रवीत् ॥ २५ ॥

" रागास्तावद्दशविधा भरताद्यैरुदीरिताः ।
ग्रामरागाश्चोपरागा रागा भाषाविभाषिकाः ॥ २६ ॥
तथैवान्तरभाषाख्या रागांगाख्यास्ततःपरम् ।
भाषांगानि क्रियांगानि चोपांगानि पुनः क्रमात् ॥ २७ ॥
दशस्वेतेषु रागेषु ग्रामरागादयः पुन ।
रागास्त्वन्तरभाषान्ता मार्गरागा भवन्ति षट् ॥ २८ ॥
ततो गंधर्वलोकेन प्रयोज्यास्ते व्यवस्थिताः ।
तस्माद्रागांगभाषांगक्रियांगोपांगसंज्ञिकाः ।
रागाश्चत्वार एवैते देशिरागा प्रकीर्तिताः ॥ २९ ॥ "
रागांगादिचतुष्कं तु सांप्रतं स्यात्सुगोचरम् ।
संगीते दाक्षिणात्यानामिति सर्वत्र संमतम् ॥ ३० ॥
मूर्छनाया रहस्यं तद्रत्नाकरप्रपंचितम् ।
स्फुटमेवाभवद्बोद्धुं न शक्त· कोऽपि पंडितः ॥ ३१ ॥
जातिप्रकरणं चापि रत्नाकरनिरुपितम् ।
अनेकानुक्तं सद्यो ज्ञातुं शक्तो न कोऽपि तत् ॥ ३२ ॥
संगीतसमयसारे चंद्रिकायां सुधाकरे ।
चूडामणिशिरोमण्यो रत्नाकरानुवर्तनम् ॥ ३३ ॥
लेखकैस्त्वपुराणैस्तैर्दृश्यतेऽनुकृतो भृशम् ।
रत्नाकरस्वराध्यायो रागाध्यायस्त्वनादृतः ॥ ३४ ॥
दामोदरस्तथा सोमनाथो रत्नाकरानुगौ ।
रागाध्यायमनादृत्य चक्रतुर्ग्रंथनिर्मितिम् ॥ ३५ ॥
अहोबलव्यंकटेशरामामात्यतुलाधिपाः ।
स्वतंत्रा राग निर्देशे दोषभाजो न मे मते ॥ ३६ ॥
पुंडरीको भावभट्टो लोचनो हृदयस्तथा ।
लक्ष्यमार्गमनुसृत्य स्वस्वग्रंथानकुर्वत ॥ ३७ ॥

रागलक्षणकाराद्या बह्वोऽन्ये परिस्फुटम् ।
विषये तत्र रागाणां स्वातंत्र्यं दर्शयन्ति ते ॥ ३८ ॥

श्रीमद्रत्नाकरप्रोक्तरागाध्यायाशयोऽखिलः ।
स्वश्लोकैर्ग्रथितः कैश्चिद्ग्रंथकारैरसंशयम् ॥ ३९ ॥

तदाशयस्तथाप्येतैरवबुद्धो यथार्थतः ।
इति तल्लेखतो नैव प्रतिभाति कथंचन ॥ ४० ॥

गूढं गूढतरं भावं प्रापयितुमसंशयम् ।
नैवोचितं कदाचित्स्याद्धीमतामिति मे मतिः ॥ ४१ ॥

प्राचीनशास्त्रकेऽज्ञाते संगीतपरिवर्तनात् ।
वस्तुस्थितिरुदाहार्या ग्रंथकृद्भिरमायया ॥ ४२ ॥

परिवर्तनशीलं यत्संगीतं ग्रंथकर्तृभिः ।
नष्टप्रायं पुराणं तत्स्पष्टीकर्तुं न शक्यते ॥ ४३ ॥

नावशक्यं हि तत्किंतु यया कयापि भाषया ।
असामंजस्यवृद्धिस्तु नाभीष्टेति ब्रवीम्यहम् ॥ ४४ ॥

रत्नाकरोक्तरागेषु व्याख्याता जातिमूर्छनाः ।
रागमेलास्तदुत्पन्ना नैव कुत्राप्यवेक्षिताः ॥ ४५ ॥

अज्ञाते ग्रामरागोक्तमेले ग्रंथो निरर्थकः ।
मेलास्तु जनकाः प्रोक्ता रागाणामिति संमतम् ॥ ४६ ॥

रागादीनामुदीर्यन्ते नानाग्रंथेषु मूर्तयः ।
तत्र तेषां च रागाणां न स्वराद्युपलभ्यते ॥ ४७ ॥

ग्रंथाः संगीतदृष्ट्या ते केवलं निष्फला मताः ।
मूर्तितास्ते कथं मेला इत्यप्युल्लेखमर्हति ॥ ४८ ॥

हनूमन्मतमद्यापि प्रचरत्यत्र लक्ष्यके ।
एतत्समर्थनं नित्यं श्रूयते गायकैः कृतम् ॥ ४९ ॥

को ग्रंथस्तन्मतस्य स्यात्किंच तत्राभिधीयते ।
इत्येवं नैव स्वप्नेऽपि तेषां समुपलभ्यते ॥ ५० ॥
जाने नाक्षेप इष्टः स्याद्ग्रंथकारोक्तिषु भृशम् ।
नार्थः स्याद्गोपने वस्तुस्थित्यास्तथापि मे मते ॥ ५१ ॥
जातिप्रकरणस्योपयोगः सम्यक्तया तथा ।
यत्र स्पष्टतया प्रोक्तः स ग्रंथो नोपलभ्यते ॥ ५२ ॥
विद्यते ह्यभिमानो मे ग्रंथोपरि महत्तरः ।
तदभ्यासे प्रयत्नोऽपि यथाशक्ति मया कृतः ॥ ५३ ॥
रत्नाकरोक्तरागाणां युक्तमेलनिरूपणे ।
प्रयत्नो न कृतः कैश्चिदिति लक्ष्यज्ञसंमतम् ॥ ५४ ॥
अतस्ते कीदृशा रागा भवेयुरिति तत्त्वतः ।
ज्ञातं तैरथवा नेति शंकास्पदं भवेद्ध्रुवम् ॥ ५५ ॥
ते स्वकालीनसंगीतनिपुणाः स्युरसंशयम् ।
नावश्यं तेन ते रत्नाकरसंगीतपारगाः ॥ ५६ ॥
संगीतदर्पणे नैव समीचीनतया पुनः ।
मूर्छनानां विवेकोऽपि सत्कृतो रागनिर्णये ॥ ५७ ॥
रत्नाकराभिधं ग्रंथं पठतो यस्य कस्यचित् ।
पुरतः प्रस्फुरन्त्येव प्रश्ना एवंविधाः स्वयम् ॥ ५८ ॥
श्रुतिजात्युपयोगः क्व क्रियेत नियमैश्च कैः ।
मेला आधुनिकाः के स्युर्मध्यमग्रामसंज्ञिताः ॥ ५९ ॥
मध्यमग्रामगा रागाः प्रचरंति न वाऽधुना ।
प्रचारेऽप्येकवाक्यत्वं भवेद्रत्नाकरस्य किम् ॥ ६० ॥
साधारणप्रकरणं ग्रामरागनिरूपणे ।
उपयोगि कथं भूयादिति कुत्रापि नोदितम् ॥ ६१ ॥

मृदुगनियुता रागाः के स्यू रत्नाकरोदिताः ।
तीव्रमध्यमयुक्ताः के किं स्यात्तेषां समर्थनम् ॥ ६२ ॥
मेला ग्रामाख्यरागाणां कीदृशा लक्ष्यवर्त्मनि ।
कथमेते च सिद्ध्येयुरित्युदाह्रियतामिह ॥ ६३ ॥
यथार्था मूर्छनाटीका कल्लिनाथकृताऽस्ति किम् ।
तथात्वे कीदृशा मेला सिद्ध्येयुरिति कथ्यताम् ॥ ६४ ॥
प्रतिरागमलंकारा निश्चिताः किमितीर्यताम् ।
रहस्यं शुद्धतानानां किमासीदित्युदीर्यताम् ॥ ६५ ॥
रागाध्याये किमप्येषां समुल्लेखो न लभ्यते ।
केषुचिच्छुद्धतानेषु कुतः षड्जविवर्जनम् ॥ ६६ ॥
रागतत्त्व्यादिरचना तत्त्वमाश्रित्य किं कृता ।
रागमिश्रणमानानि तत्र ज्ञेयान्यथो कथम् ॥ ६७ ॥
अपेक्षा मध्यमग्रामस्यासीत् प्राक्किं न साऽधुना ।
किमासीत्तीव्रमस्यात्र संबंधो रागमेलने ॥ ६८ ॥
एवं स्युः कतिचित् प्रश्ना अर्वाचीनविदां हृदि ।
ज्ञानसामग्र्यभावे तु किं ते ब्रूयुस्तपस्विनः ॥ ६९ ॥
दुर्बोधांशं परित्यज्य प्रचारमनुसृत्य च ।
यत्तेषां ग्रंथनिर्माणं समीचीनं हि मे मते ॥ ७० ॥
स्वाभिप्रायं सदा स्पष्टं जानीयुः सकला जनाः ।
एतदेव भवेद्ध्येयं ग्रंथानामित्यसंशयम् ॥ ७१ ॥
रागपूर्वविबोधोऽथ चतुर्दण्डिकलानिधी ।
तरंगिणी तथा रागमंजरी पारिजातकः ॥ ७२ ॥
कौमुदी तत्त्वबोधोऽपि हृत्प्रकाशश्च कौतुकम् ।
ग्रंथानेतान् प्रकुर्वाणा यान्ति ते धन्यतां ध्रुवम् ॥ ७३ ॥

निर्व्याजं निर्भयं स्पष्टं प्रोक्तानि स्वमतानि तैः ।
अकारि च समीचीनं यद्दृष्टं लक्ष्यवर्त्मनि ॥ ७४ ॥

ननु नावगताः सम्यग् ग्रंथास्त इति चेन्मतम् ।
तदास्मल्लेखजाद्वादादिष्टः स्यात्तत्त्वनिर्णयः ॥ ७५ ॥

---

संगीतं ग्रंथगं लक्ष्यगं माविगमिति त्रिधा ।
ग्रंथगेऽन्तर्गतं सर्वं संगीतं शास्त्रगोचरम् ॥ ७६ ॥
यदिदानीं प्रचरति लक्ष्यसंगीतमेव तत् ।
एतावदेव ग्रंथेऽस्मिन्नान्यच्छास्त्ररहस्यकम् ॥ ७७ ॥
केनोपायेनाधुनिकं लक्ष्यसंगीतमाश्विदम् ।
अवगन्तव्यमित्येव साध्यमत्र न संशयः ॥ ७८ ॥

---

## संगीतप्रशस्तिः

सामवेदादिदं गीतं संजग्राह पितामहः ॥ ७९ ॥
गीतेन प्रीयते देवः सर्वज्ञः पार्वतीपतिः ।
गोपीपतिरनन्तोऽपि वंशध्वनिवशंगतः ॥ ८० ॥
सामगीतिरतो ब्रह्मा वीणासक्ता सरस्वती ।
किमन्ये यक्षगंधर्वदेवदानवमानवाः ॥ ८१ ॥
अज्ञातविषयास्वादो बालः पर्यंकिकागतः ।
रुदन् गीतामृतं पीत्वा हर्षोत्कर्षं प्रपद्यते ॥ ८२ ॥
वनेचरस्तृणाहारश्चित्रं मृगशिशुः पशुः ।
लुब्धो लुब्धकसंगीते गीते त्यजति जीवितम् ॥ ८३ ॥
तस्य गीतस्य माहात्म्यं के प्रशंसितुमीशते ।
धर्मार्थकाममोक्षाणामिदमेवैकसाधनम् ॥ ८४ ॥

रत्नाकरे ॥

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं च गच्छति ॥ ८५ ॥

---

साहित्यसंगीतकलाविहीनः
साक्षात्पशुः पुच्छविषाणहीनः ।
तृणं न खादन्नपि जीवमानः
तद्भागधेयं परमं पशूनाम् ॥ ८६ ॥

सुखिनि सुखनिदानं दुःखितानां विनोदः
श्रवणहृदयहारी मन्मथस्याग्रदूतः ॥
*अतिचतुरसुगम्यो वल्लभः कामिनीनाम्*
जयति जयति नादः पंचमश्चोपवेदः ॥ ८७ ॥

---

अथ नादः ।

गीतं नादात्मकं वाद्यं नादव्यक्त्या प्रशस्यते ।
तद्द्वयानुगतं नृत्तं नादाधीनमतस्त्रयम् ॥ ८८ ॥

नादेन व्यज्यते वर्णः पदं वर्णात्पदाद्वचः ।
वचसा व्यवहारोऽयं नादाधीनमतो जगत् ॥ ८९ ॥

सर्वसंगीतशास्त्रस्य नादो जीवितमीरितम् ।
अतो नादस्य माहात्म्यं व्याख्यातुं केन शक्यते ॥ ९० ॥

---

नादस्थानानि ।

व्यवहारे त्वसौ त्रेधा हृदि मंद्रोऽभिधीयते ।
कंठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः ॥ ९१ ॥

---

अथ श्रुतयः ।

तस्य द्वाविंशतिर्भेदाः श्रवणाच्छ्रुतयो मताः ।
हृद्यूर्ध्वनाडीसंलग्ना नाड्यो द्वाविंशतिर्मताः ॥ ९२ ॥
तिरश्च्यस्तासु तावत्यः श्रुतयो मारुताहताः ।
उच्चोच्चतरतायुक्ताः प्रभवन्त्युत्तरोत्तरम् ॥
एवं कंठे तथा शीर्षे श्रुतिर्द्वाविंशतिर्मता ॥ ९३ ॥

रत्नाकरे ॥

---

श्रुतिलक्षणम् ।

नित्यं गीतोपयोगित्वमभिज्ञेयत्वमप्युत ।
लक्ष्यविद्भिः समादिष्टं पर्याप्तं श्रुतिलक्षणम् ॥ ९४ ॥
प्रतिस्थानसमासक्ता श्रुतिर्द्वाविंशतिर्मता ।
संगीताद्यस्वराणां स्यात्संमता जन्मभूरसौ ॥ ९५ ॥

---

श्रुतिप्रमाणादिव्यक्त्यर्थं वीणानिदर्शनम् ।

व्यक्तये कुर्महे तासां वीणाद्वंद्वे निदर्शनम् ।
द्वे वीणे सदृशे कार्ये यथा नादः समो भवेत् ॥ ९६ ॥
तयोर्द्वाविंशतिस्तंत्र्यः प्रत्येकं तासु चादिमा ।
कार्या मंद्रतमध्वाना द्वितीयोच्चध्वनिर्मनाक् ॥
स्यान्निरन्तरता श्रुत्योर्मध्ये ध्वन्यन्तराश्रुतेः ॥९७॥

रत्नाकरे ॥

---

कल्लिनाथकृतटीकायाम् ।

आदिमा प्रथमा तंत्री । मंद्रतमध्वाना अतिमंद्रस्वना । उत्तरोत्तरापेक्षया पूर्वपूर्वस्य मंद्रत्वे संभवत्यपि सर्वापेक्षयेयं मंद्रेति

ायोगः। अतिमंद्रत्वं च तंत्र्या अतिशिथिलीकरणेन भवति।
ोया तंत्री मनागुच्चध्वनिः कार्या। मनागुच्चध्वनित्वस्यैव
ास्थापकं स्यान्निरन्तरतेति। श्रुत्योः पूर्वोत्तरतंत्र्युत्पन्नयोर्मध्ये
न्यंतराश्रुतेर्ध्वन्यन्तरस्य पूर्वोत्तरश्रुतिविलक्षणस्य पूर्वश्रुतेः किंचि-
स्योत्तरश्रुतेः किंचिन्नीचस्यान्यध्वनेरश्रुतिरश्रवणम्। मध्यगत
यन्तराश्रवणं निमित्तीकृत्य श्रुत्योर्निरन्तरता यथा स्यात्तथा
ी किंचिद्दृढीकरणेन मनागुच्चध्वनिः कार्येत्यर्थः। अत्र नैरन्तर्यं
न्योरेवोक्तम्।

तथा हि भरतकृतनाट्यशास्त्रे।

अथ ग्रामौ। षड्जग्रामो मध्यमग्रामश्चेति। तत्र वा द्वाविं-
तिः श्रुतयः। यथा–

तिस्रो द्वे च चतस्रश्च चतस्रस्तिस्र एव च।
द्वे चतस्रश्च षड्जाख्ये ग्रामे श्रुतिनिदर्शनम्॥ ९८॥

मध्यमग्रामे तु श्रुत्यपकृष्टः पंचमः कार्यः। पंचमश्रुत्युत्कर्षा
ापकर्षाद्वा यदन्तरं मार्दवादायतत्वाद्वा तत्प्रमाणश्रुतिः।

निदर्शनं त्वासामभिव्याख्यास्यामः। यथा–द्वे वीणे तुल्य-
माणतंत्र्युपवादनदंडमूर्छने षड्जग्रामाश्रिते कार्ये। तयोरेकतरस्यां
ध्यमग्रामिकीं कृत्वा पंचमस्यापकर्षे श्रुतिं तामेव पंचमवशात्
ड्जग्रामिकीं कुर्यात्। एवं श्रुतिरपकृष्टा भवति। पुनरपि तद्वदेवाप-
र्षाद्गांधारनिषादवन्तावितरस्यां धैवतर्षभौ प्रविशतो द्विश्रुत्यधिक-
वात्। पुनस्तद्वदेवापकर्षाद्धैवतर्षभावितरस्यां पंचमषड्जौ प्रविशत-
स्त्रिश्रुत्यधिकत्वात्। तद्वत्पुनरपकृष्टायां तस्यां पंचममध्यमषड्जा
इतरस्यां मध्यमगांधारनिषादवन्तः प्रवेक्ष्यन्ति चतुःश्रुत्यधिकत्वात्।

एवमनेन श्रुतिनिदर्शनेन द्वैग्रामिक्यो द्वाविंशतिश्रुतयः प्रत्यवगन्तव्याः ।

सिंहभूपालकृतटीकायाम्:—

यथा मध्ये विसदृशं ध्वन्यन्तरं नोत्पद्यते तथा नैरंतर्यं विधेयम् । तदुक्तम् । " द्वितीया तु ततस्तीव्रध्वनिस्तंत्री विधीयते । तथा यथा तयोर्मध्ये तृतीयो न ध्वनिर्भवेत् । " श्रुतेः प्रमाणमुक्तं मतंगेन । ननु श्रुतेः किं प्रमाणम् ? । उच्यते । पंचमस्तावद्ग्रामद्वयस्थो लोके प्रसिद्धः । तस्योत्कर्षणापकर्षणाभ्यां मार्दवादायतत्वाद्वा यदन्तरं तत्प्रमाणश्रुतिः ।

श्रुतिषु स्वरस्थापनाप्रकारः । रत्नाकरे ।

अधराधरतीव्रास्तास्तज्जो नादः श्रुतिर्मतः ।
वीणाद्वये स्वराः स्थाप्यास्तत्र षड्जश्चतुःश्रुतिः ॥ ९९ ॥

स्थाप्यस्तंत्र्यां तुरीयायामृषभस्त्रिश्रुतिस्ततः ।
पंचमीतस्तृतीयायां गांधारो द्विश्रुतिस्ततः ॥ १०० ॥

अष्टमीतो द्वितीयायां मध्यमोऽथ चतुःश्रुतिः ।
दशमीतश्चतुर्थ्यां स्यात्पंचमोऽथ चतुःश्रुतिः ॥ १ ॥
चतुर्दशीतस्तुर्यायां धैवतस्त्रिश्रुतिस्ततः ।
अष्टादश्यास्तृतीयायां निषादो द्विश्रुतिस्ततः ॥ २ ॥
एकविंश्या द्वितीयायां वीणेकाऽत्र ध्रुवा भवेत् ।
चलवीणा द्वितीया तु तस्यां तंत्रीस्तु सारयेत् ॥ ३ ॥

श्रुतिस्वरेयत्तापरिज्ञानार्थं चलवीणायां सारणाप्रकारः ।

स्वोपान्त्यतंत्रीमानेयास्तस्यां सप्तस्वरा बुधैः ।
ध्रुववीणास्वरेभ्योऽस्यां चलायां ते स्वरास्तदा ॥ ४ ॥

एकश्रुत्यपकृष्टाः स्युरेवमन्यापिसारणा ।
श्रुतिद्वयलयादस्यां चलवीणागतौ गनी ॥ ५ ॥
ध्रुववीणोपगतयो रिधयोर्विशतः क्रमात् ।
तृतीयस्यां सारणायां विशतः सपयो रिधौ ।
निगमेषु चतुर्थ्यां तु विशन्ति समपाः क्रमात् ॥ ६ ॥

सारणाफलमाह ।

श्रुतिद्वाविंशतावेवं सारणानां चतुष्टयम् ।
ध्रुवाश्रुतिषु लीनायामियत्ता ज्ञायते स्फुटम् ॥ ७ ॥
नाट्यशास्त्रे तथा रत्नाकरग्रंथेऽपि सर्वथा ।
श्रुतयः स्युः समानास्ता इतिसंगीतविन्मतम् ॥ ८ ॥

श्रुतिनामानि ।

तीव्रा कुमुद्वतीमंदाछंदोवत्यस्तु षड्जगाः ।
दयावती तु रंजनी रक्तिकेत्यमूः ॥ ९ ॥
रौद्री क्रोधीति गांधारे वज्रिकाऽथ प्रसारिणी ।
प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः ॥ १० ॥
क्षिती रक्ता च संदीपिन्यालापिन्यपि पंचमे ।
मदन्ती रोहिणी रम्येत्येतास्तिस्रस्तु धैवते ।
उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती ॥ ११ ॥

श्रुतिवंटननियमः ।

चतुश्चतुश्चतुश्चैव षड्जमध्यमपंचमाः ।
द्वे द्वे निषादगांधारौ त्रिस्त्रीरिषभधैवतौ ॥ १२ ॥
यदि द्वाविंशतिः प्रोक्ताः श्रुतयः पूर्वसूरिभिः ।
व्यवहारे न ताः सर्वाः प्रयुक्तास्तैरितिस्फुटम् ॥ १३ ॥
सौकर्यार्थं स्वराणां चापराः संज्ञाः समादृताः ।
सरिगमपधनीतिसंक्षिप्ता लक्ष्यवर्त्मनि ॥ १४ ॥

# प्राचीनग्रंथकारसंमतं वीणादंडे शुद्धस्वरस्थापनम् ।

| | श्रुतिनामानि | शुद्धस्वराः | |
|---|---|---|---|
| १ | तीव्रा | | |
| २ | कुमुद्वती | | |
| ३ | मंदा | | |
| ४ | छंदोवती | शुद्धषड्जः | |
| ५ | दयावती | | |
| ६ | रंजनी | | |
| ७ | रक्तिका | शुद्धऋषभः | |
| ८ | रौद्री | | |
| ९ | क्रोधी | शुद्धगांधारः | |
| १० | वज्रिका | | |
| ११ | प्रसारिणी | | |
| १२ | प्रीतिः | | |
| १३ | मार्जनी | शुद्धमध्यमः | |
| १४ | क्षिति. | | |
| १५ | रक्ता | | |
| १६ | संदीपिनी | | |
| १७ | आलापिनी | शुद्धपंचम. | |
| १८ | मदंती | | |
| १९ | रोहिणी | | |
| २० | रम्या | शुद्धधैवतः | |
| २१ | उग्रा | | |
| २२ | क्षोभिणी | शुद्धनिषाद· | |
| १ | तीव्रा | | |
| २ | कुमुद्वती | | |
| ३ | मंदा | | |
| ४ | छंदोवती | शुद्धषड्जः | |

ग्रामाः ।

ग्रामः स्वरसमूहः स्यान्मूर्छनादेः समाश्रयः ।
तौ द्वौ धरातले प्रोक्तौ षड्जग्रामोऽत्र चादिमः ॥ १५ ॥
द्वितीयो मध्यमग्रामस्तयोर्लक्षणमुच्यते ।
षड्जग्रामः पंचमे स्वचतुर्थश्रुतिसंस्थिते ॥ १६ ॥
स्वोपान्त्यश्रुतिसंस्थेऽस्मिन्मध्यमग्राम इष्यते ।
यद्वा धस्त्रिश्रुतिः षड्जे मध्यमे तु चतुःश्रुतिः ॥ १७ ॥
रिमयोः श्रुतिमेकैकां गांधारश्चेत्समाश्रितः ।
पश्रुतिं धो निषादस्तु धश्रुतिं सश्रुतिं श्रितः ॥ १८ ॥
गांधारग्राममाचष्टे तदा तं नारदो मुनिः ।
प्रवर्तते स्वर्गलोके ग्रामोऽसौ न महीतले ॥ १९ ॥

रत्नाकरे ।

अथ ग्रामौ—षड्जग्रामो मध्यमग्रामश्च । तत्र या द्वाविंशति-श्रुतयः । यथा—

तिस्रो द्वे च चतस्रश्च चतस्रस्तिस्र एव च ।
द्वे चतस्रश्च षड्जाख्ये ग्रामे श्रुतिनिदर्शनम् ॥ २० ॥
षड्जश्चतुःश्रुतिर्ज्ञेय ऋषभस्त्रिश्रुतिस्तथा ।
द्विश्रुतिश्चैव गांधारो मध्यमश्च चतुःश्रुतिः ॥ २१ ॥
चतुःश्रुतिः पंचमः स्याद्धैवतस्त्रिश्रुतिस्तथा ।
निषादो द्विश्रुतिश्चैव षड्जग्रामे भवन्ति हि ॥ २२ ॥
चतुःश्रुतिस्तु विज्ञेयो मध्यमः पंचमः पुनः ।
त्रिश्रुतिर्धैवतस्तु स्याच्चतुःश्रुतिक एव हि ॥ २३ ॥
निषादषड्जौ विज्ञेयौ द्विचतुःश्रुतिसंभवौ ।
ऋषभस्त्रिश्रुतिश्च स्याद्गांधारो द्विश्रुतिस्तथा॥२४॥नाट्यशास्त्रे ।

---

ग्रामेष्वेतेषु गांधारग्रामो नास्ति महीतले ।
स्वर्गलोके वर्ततेऽसौ सर्वेषामेव संमतम् ॥ ३४ ॥
अस्माभिर्मध्यमग्रामोऽप्यसत्त्वाय इतीर्यते ।
तथा हि मध्यमग्रामे त्रिश्रुतिः पंचमः खलु ॥ ३५ ॥
वराळीमध्यमो जातः स पुनर्लक्ष्यवर्त्मनि ।
मध्यमादिप्रभृतिषु मध्यमग्रामजन्मसु ॥ ३६ ॥
रागेषु दृश्यते नैव वराळीमध्यमस्ततः ।
अयुक्तो मध्यमग्रामो लक्ष्यमार्गविरोधतः ॥ ३७ ॥
एक एव ततः षड्जग्राम इत्यवधार्यते ।
षड्जग्रामोद्भवा रागा इत्यनेन निरूपितम् ॥ ३८ ॥

चतुर्दंडिप्रकाशिकायाम् ।

भरतेनोदिते शास्त्रे ग्रामौ द्वौ षड्जमध्यमौ
षड्जग्रामः पंचमे तु सप्तदश्यां श्रुतौ स्थिते ॥ ३९ ॥
स्वरेऽस्मिन् पंचमे किंतु षोडशीं श्रुतिमाश्रिते ॥
तत्रैव मध्यग्रामः सोऽद्य लक्ष्ये न दृश्यते ॥ ४० ॥
षड्जग्रामाश्रितान् रागान् सर्वे गायन्ति गायकाः ।
तस्मान्मुख्यतमः षड्जग्रामोऽसौ नैव मध्यमः ॥४१ ॥

संगीतसारामृते ।

टिप्पनी ।

चतुश्चतुश्चतुश्चैव षड्जमध्यमपंचमाः ।
द्वे द्वे निषादगांधारौ त्रिस्त्री रिषभधैवतौ ॥ ४२ ॥
एनयैव व्यवस्थितया पुराणैरपुराणकैः ।
ग्रंथकारैः समादिष्टः षड्जग्रामाभिधः सदा ॥ ४३ ॥
पद्धत्यां दाक्षिणात्यानां मेलः शुद्धस्वरान्वितः ।
मुखारीति प्रसिद्धः स्यात्कनकांगीति वाऽधुना ॥ ४४ ॥

पंडितैर्मध्यकालीनैर्हृदयाहोबलादिभिः ।
निश्चितः शुद्धमेलोऽत्र धनाश्रीः सैंधवोऽथवा ॥ ४५ ॥

शुद्धस्थानान्ययुक्तानि दृष्ट्वाऽस्मिन् पंडितैः पुनः ।
हिंदुस्थानीयपद्धत्यां श्रुतिक्रमविपर्ययात् ।
वेलावल्यभिधो मेलः शुद्धनाम्ना समाहृतः ॥ ४६ ॥

शुद्धमेलो हि सर्वत्र षड्जग्राम इतीर्यते ।
वेलावल्यभिधो लक्ष्ये षड्जग्रामत्वमर्हयेत् ॥ ४७ ॥

प्राचीनार्वाचीनविकृतस्वरनिर्णयः ।

स्वरस्तु प्रच्युतः श्रुत्या नियताया यदा भवेत् ।
विकृतत्वं तदा तस्य वर्णयन्ति विपश्चितः ॥ ४८ ॥

रिगमधनयो लक्ष्येऽत्र विकृता उदाहृताः ।
सपावविकृतौ नित्यमतस्तावचलौ मतौ ॥ ४९ ॥

रत्नाकरोक्तद्वादशविकृतस्वराः ।

च्युतोऽच्युतो द्विधा षड्जो द्विश्रुतिर्विकृतो भवेत् ।
साधारणे काकलीत्वे निषादस्य च दृश्यते ॥ ५० ॥

साधारणे श्रुतिं षाड्जीमृषभः संश्रितो यदा ।
चतुःश्रुतित्वमायाति तदैको विकृतो भवेत् ॥ ५१ ॥

साधारणे त्रिश्रुतिः स्यादन्तरत्वे चतुःश्रुतिः ।
गांधार इति तद्भेदौ द्वौ निःशंकेन कीर्तितौ ॥ ५२ ॥

मध्यमः षड्जवद्द्वेधाऽन्तरसाधारणाश्रयात् ।
पंचमो मध्यमग्रामे त्रिश्रुतिः कैशिके पुनः ॥ ५३ ॥

मध्यमस्य श्रुतिं प्राप्य चतुःश्रुतिरिति द्विधा ।
धैवतो मध्यमग्रामे विकृतः स्याच्चतुःश्रुतिः ॥ ५४ ॥

कैशिके काकलीत्वे च निषादस्त्रिचतुःश्रुतिः ।
प्राप्नोति विकृतौ भेदौ द्वाविति द्वादश स्मृताः ॥
ते शुद्धैः सप्तभिः सार्धं भवन्त्येकोनविंशतिः ॥ ५५ ॥

संगीतदर्पणे ।

शुद्धाः सप्तस्वरास्ते च मंद्रादिस्थानतस्त्रिधा ।
च्युताच्युतादिभेदेन विकृता द्वादशोदिताः ॥ ५६ ॥
चतुःश्रुतिर्यदा षड्जो द्विश्रुतिर्विकृतस्तदा ।
साधारणे च्युतः स स्यात् काकलीत्वेऽच्युतः स्मृतः॥ ५७ ॥
त्रिश्रुतिऋषभः साधारणे षाड्जीं श्रुतिं श्रितः ।
चतुःश्रुतित्वमापन्नस्तदैको विकृतो भवेत् ॥ ५८ ॥
साधारणे मध्यमस्य गांधारस्त्रिश्रुतिर्भवेत् ।
स्वरस्यान्तरत्वे भवति चतुःश्रुतिरिति द्विधा ॥ ५९ ॥
च्युताच्युतादिभेदेन मध्यमः षड्जवद्भवेत् ।
साधारणेऽन्तरत्वे च द्विश्रुतिर्विकृतस्तदा ॥ ६० ॥
पंचमो मध्यमग्रामे त्रिश्रुतिर्जायते स्वरः ।
मध्यमस्य श्रुतिं प्राप्य कैशिके तु चतुःश्रुतिः ॥ ६१ ॥
धैवतो मध्यमग्रामे विकृतः स्याच्चतुःश्रुतिः ।
कैशिके काकलीत्वे च निषादस्त्रिचतुःश्रुतिः ॥
एतैश्च सप्तभिः शुद्धैर्भवन्त्येकोनविंशतिः ॥ ६२ ॥

टिप्पनी ।

एवं दर्पणकारेण येन केनापि हेतुना ।
रत्नाकरोदिता ग्रंथे व्यवस्थितिरनूदिता ॥ ६३ ॥
स्वरा रत्नाकरोक्ताः स्युर्दुर्बोधा अद्य लक्ष्यके ।
तथैव दर्पणोक्तास्ते भवेयुर्वादमूलकाः ॥ ६४ ॥

# वीणादंडे संगीतरत्नाकरोक्तशुद्धविकृतस्वरनिदर्शनम्।

| | षड्जतंत्र्याम्। | |
|---|---|---|
| | शुद्धस्वराः | विकृतस्वराः |
| छंदोवती | शुद्धषड्ज | अच्युतषड्ज |
| दयावती | | |
| रंजनी | | |
| रतिका .. | शुद्धऋषभ | विकृतऋषभ |
| रौद्री | | |
| क्रोधी . | शुद्धगांधार | |
| वज्रिका | | साधारणगांधार |
| प्रसारिणी | | अन्तरगांधार |
| प्रीति | | च्युतमध्यम |
| मार्जनी | शुद्धमध्यम | अच्युतमध्यम |
| क्षिति | | |
| रक्ता | | |
| संदीपिनी | | त्रिश्रुतिप, कैशिकप |
| आलापिनी | शुद्धपंचम | |
| मदंती | | |
| रोहिणी | | |
| रम्या | शुद्धधैवत | विकृतधैवत |
| उग्रा | | |
| क्षोभिणी . | शुद्धनिषाद | |
| तीव्रा | | कैशिकनिषाद |
| कुमुद्वती | | काकलीनिषाद |
| मंदा | | च्युतषड्ज |
| छंदोवती | शुद्धषड्ज | |
| | ७ | १२ |

स्वरमेलकलानिधौ शुद्धविकृतस्वरनिर्णयः ।

तत्र तुर्यश्रुतौ षड्जः सप्तम्यामृषभो मतः ।
ततो नवम्यां गांधारस्त्रयोदश्यां तु मध्यमः ॥ ६५ ॥
पंचमः सप्तदश्यां तु धैवतो विंशतिश्रुतौ ।
द्वाविंश्यां तु निषादः स्यात् श्रुतिष्वित्थं स्वरोद्भवः ॥६६॥
एते षड्जादयः सप्त स्वराः शुद्धाः प्रकीर्तिताः ।
विकृताश्चैव सप्तैवेत्येवं सर्वे चतुर्दश ॥ ६७ ॥
ननु रत्नाकरे शार्ङ्गदेवेन विकृताः स्वराः ।
द्वादशोक्ताः कथं ते तु सप्तैव कथितास्त्वया ॥ ६८ ॥
सत्यं लक्षणतो भेदो द्वादशानामपीष्यते ।
शुद्धेभ्यस्तत्र भेदस्तु सप्तानामेव लक्षितः ॥ ६९ ॥
आधारश्रुतिसंत्यागाद् ध्वनिभेदः प्रकीर्तितः ।
पंचानां परिशिष्टानां स्वराणां विकृतात्मनाम् ॥ ७० ॥
पूर्वस्वरश्रुतिग्राहाद्वा पूर्वश्रुतिवर्जनात् ।
अपि लक्षणतो भेदे पूर्वोक्तस्वरसंहतेः ॥ ७१ ॥
आधारश्रुतिनिष्ठत्वाल्लक्ष्यभेदो न विद्यते ।
कथं न भेद इति चेत् सलक्ष्यं तन्निरूप्यते ॥ ७२ ॥
शुद्धषड्जादच्युतस्तु स षड्जो नैव भिद्यते ।
अच्युतो मध्यमः शुद्धान्मध्यमान्न भिदां भजेत् ॥ ७३ ॥
शुद्धर्षभाच्च विकृतो रिषभो न पृथग्भवेत् ।
विकृतो धैवतः शुद्धाद्धैवतान्नातिरिच्यते ॥ ७४ ॥
मध्यमश्रुत्युपादाने विकृतः पंचमस्तु यः ।
विकृताच्चैव पंचमान्न भेदं चाश्नुते ध्रुवम् ॥ ७५ ॥

तस्माच्चतुर्दशस्वेवं पूर्वोक्तेष्वेव पंचकः ॥
अंतर्भूतो यतस्तस्मान्न पृथक् कथितो मया ॥ ७६ ॥
सप्तानां विकृतानां तु सोद्देशं लक्ष्म चक्ष्महे ।
च्युतः षड्जश्च्युतो मश्च च्युतः स्यात् पंचमस्तथा ॥७७॥
स्यात् साधारणगांधारोऽन्तरगांधार एव च ।
स्यात्कैशिकनिषादोऽथान्यः काकलीनिषादकः ॥ ७८ ॥

लक्ष्ये नामान्तराणि ।

चतुर्दशस्वरेष्वेषु वक्ष्ये लक्ष्यानुसारतः ।
नामान्तराणि केषांचिद् व्यवहारप्रसिद्धये ॥ ७९ ॥
च्युतषड्जस्वरो लक्ष्ये निषादत्वेन कीर्तितः ।
च्युतषड्जनिषादाभिधानं तस्य विधीयते ॥ ८० ॥
च्युतस्यमध्यमस्यापि गांधारव्यवहारतः ।
च्युतमध्यमगांधारसंज्ञाऽस्य क्रियते मया ॥ ८१ ॥
च्युतपंचममाचष्टे लोका मध्यमसंज्ञया ।
अस्माभिः कथ्यते सोऽतश्च्युतपंचममध्यमः ॥ ८२ ॥
लक्ष्येऽत्र कुत्रचिच्छुद्धगांधारस्थानमाश्रयन् ।
ऋषभः कीर्त्यतेऽस्माभिः पंचश्रुत्यृषभाह्वयः ॥ ८३ ॥
स साधारणगांधारस्थानस्थो रिषभो यदि ।
लक्ष्यानुसारतः प्रोक्तस्ततष्षट्श्रुतिरेव सः ॥ ८४ ॥

अनुवादः ।

अथानुवादः क्रियते क्रमादुक्तस्वरावलेः ॥
शुद्धाः सप्तस्वराः शुद्धपूर्वया तत्तदाख्यया ।
विशेषाः क्रमशः शुद्धषड्जः शुद्धर्षभस्ततः ॥ ८५ ॥

शुद्धगांधार इत्येवं शुद्धमध्यम इत्यपि ।
शुद्धपंचम इत्युक्तः शुद्धधैवत इत्यपि ॥ ८६ ॥
ततः शुद्धनिषादश्चेत्येवं सप्त स्वराभिधाः ।
विकृताः सप्त कथ्यन्ते च्युतषड्जनिषादकः ॥ ८७ ॥
च्युतमध्यमगांधारश्च्युतपंचममध्यमः ।
स साधारणगांधारः स्यात्कैशिकनिषादकः ॥ ८८ ॥
स्यात्काकलीनिषादश्चान्तरगांधार इत्यपि ।
शुद्धगांधारके तत्र पंचश्रुत्यृषभोऽभिधा ॥ ८९ ॥
साधारणेऽपिगांधारे षट्श्रुत्यृषभनाम च ।
अस्ति क्वचित् क्वचिद्रागमेलने गानसंमतम् ॥ ९० ॥
शुद्धनिषादनामान्यत् स्यात् पंचश्रुतिधैवतः ।
स्यात् कैशिकनिषादेऽन्यन्नाम षट्श्रुतिधैवतः ॥ ९१ ॥
चतुर्दश स्वराह्येते रागे रागे भवन्त्यमी ।
पर्यायेण स्वराः सप्त त्रिस्थाने नाधिकाः क्वचित् ॥ ९२ ॥

# वीणादंडे स्वरमेलकलानिध्युक्तशुद्धविकृतस्वरनिदर्शनम् ।

शुद्धषड्जतन्त्र्याम्

| मध्ये स्वराः | शुद्धस्वराः | विकृतस्वराः |
|---|---|---|
| शुद्ध षड्ज | शुद्धषड्ज | |
| कोमलर्षभ | शुद्धऋषभ | |
| शुद्धर्षभ<br>कोमलगांधार<br>तीव्रगांधार | शुद्धगांधार | पंचश्रुतिरि,<br>साधारणग षट्श्रुतिरि<br>अंतरगांधार<br>च्युतम ध्यमगांधार |
| शुद्धमध्यम | शुद्धमध्यम | |
| तीव्रमध्यम<br>शुद्धपंचम | <br>शुद्धपंचम | च्युतपंचममध्यम |
| कोमलधैवत | शुद्धधैवत | |
| शुद्धधैवत<br>कोमलनिषाद<br>तीव्रनिषाद | शुद्धनिषाद | पंचश्रुतिध,<br>कैशिकनि, षट्श्रुतिध<br>काकलीनिषाद<br>च्युतषड्जनिषाद |
| शुद्धषड्ज | शुद्धषड्ज | |

रागविबोधे शुद्धविकृतस्वरनिर्णयः ।

षड्जर्षभगांधारमध्यमपंचमकधैवतनिषादाः ।
इत्यभिधास्त्वमीषां सरिगमपधनीति संज्ञाऽन्या ॥ ९३ ॥
तेषां श्रुतयः क्रमतो वेदा रामा दृशौ तथांबुधयः ।
निगमा दहनाः पक्षावेवं द्वाविंशतिः सर्वाः ॥ ९४ ॥
तुर्यायां सप्तम्यां तासु नवम्यां श्रुतौ त्रयोदश्याम् ।
सप्तदशीविंशीद्वाविंशीषु च ते स्फुटाः क्रमतः ॥ ९५ ॥
पृथुवक्ष्यमाणवीणामेरौ स्थाप्याश्चतस्र इति तंत्र्यः ।
मंद्रतमध्वनिराद्या त्रयं क्रमोच्चस्वनं किंचित् ॥ ९६ ॥
न्यस्याः सूक्ष्माः सार्योऽथ द्वाविंशतिरधश्चरमतंत्र्याः ।
तंत्री यथेयमुच्चोच्चतररवा किमपि तासु स्यात् ॥ ९७ ॥
द्यंतर्नेष्टोऽन्यरवः श्रुतय इति रवा इहांत्यतंत्र्यां सः ।
ऋषभस्तृतीयसार्यां गः पंचम्यां नवम्यां मः ॥ ९८ ॥
पस्तु त्रयोदशीस्थः षोडश्यष्टादशीस्थितौ च धनी ।
द्वाविंशीस्थः षड्जो द्विगुणसमः पूर्वषड्जेन ॥ ९९ ॥

---

टिप्पनी ।

रागविबोधे रत्नाकरवन्नियतं श्रुतिप्रमाणमभूत् ।
इति शंकयन्ति केचिद् द्यंतर्नेष्टोऽन्यरवोक्तेः ॥ २०० ॥

---

" इति सप्तोक्ताः शुद्धा विकृतान्सतैव वच्मि सह नाम्ना ।
साधारणोन्तरश्च श्रुतिं श्रुती चैत्य गो मस्य ॥ १ ॥

निः कैशिकी च काकल्यथ सस्यैकां भजंश्च तां ते द्वे ।
निगमा मृदुपरसमपाः समपतृतीयश्रुतिस्थित्या ॥ २ ॥

---

द्वादशविकृतान् पूर्वे वदंति तत्र तु पृथक् पृथग्ध्वनितः ।
सप्तैव स्युर्भिन्नाः न पंच यदि मे समध्वनयः ॥ ३ ॥
न पृथक् शुद्धसमाभ्यामच्युतसमकौ चतुःश्रुती च रिधौ ।
शुद्धरिधाभ्यां विकृतस्त्रिश्रुतिपादपि चतुःश्रुतिपः ॥ ४ ॥
भिन्नो न चतुःश्रुतिधो निःशंकमतेऽपि कूटपुनरुक्तौ ।
तल्लक्षणतो भेदृव्यमीपु पंचसु न लक्ष्ये भित् ॥ ५ ॥

प्राचीनोक्तविकृतेभ्योऽन्यानपि विकृतानाह ।

रिधयोः परश्रुतिगतेश्चतस्र इह पंच षट् तथा श्रुतयः ।
देशी रागेष्वभिवीक्ष्यंते च षट् तथा गमयोः ॥ ६ ॥
इति तेपु संभवंति त्रयोन्य एभ्यो विलक्षणा विकृताः ।
पंचश्रुतिः शुचेर्गात्साधारणतः षट्श्रुतिकः ॥ ७ ॥
रिर्न पृथक् तादृग्धो नेः कैशिकिनश्च षट्श्रुतेर्गो मात् ।
किंतूक्तरिधगमानां व्यवहृतये पृथगिमाः संज्ञाः ॥ ८ ॥
तीव्रश्चतुःश्रुतित्वे पंचश्रुतिकत्व एव तीव्रतरः ।
षट्श्रुतिकत्वे तीव्रतम इति परं ता यथायोग्यम् ॥ ९ ॥
तादिति च शास्त्रविरोधि न वाद्याध्याये हि शार्ङ्गदेवेन ।
लक्ष्यस्थित्यै प्रोक्तं शास्त्रार्थस्यान्यथात्वमपि ॥ १० ॥
षट्श्रुतिकं मं पंचश्रुतिकौ च चतुःश्रुती रिधावगदत् ।
रागविवेकाध्यायव्याख्याने कल्लिनाथसूरिरपि ॥ ११ ॥"

टीकायाम् ।

पंचश्रुतिः रिः शुचेः शुद्धात् गात् गांधारात् । पट्श्रुतिकश्च
: साधारणात् साधारणाख्यविकृतगांधारात् । न पृथक् न भिन्नः।
एव स इत्यर्थः । चापरं तादृक् पंचश्रुतिः पट्श्रुतिश्च धः धैवतः
: शुचेर्निपादात् कैशिकिनश्च तदाख्यविकृतनिपादाच्च क्रमेणे-
व । पट्श्रुतिर्गः मात् शुचेर्मध्यमात् न पृथक् । पंचश्रुतिको रिः
ांधार एव । पट्श्रुतिकश्च रिः साधारण एव । एवं पंचश्रुतिर्धो
ेपाद एव । पट्श्रुतिश्च धः कैशिक्येव ।

चतुःश्रुत्यादिप्रकाराणां रिधगमानां पृथक्संज्ञाः ।

चतुःश्रुतित्व एव तीव्र इति रिधादीनां संज्ञेत्यर्थात् । एवं
चश्रुतिकत्वपट्श्रुतिकत्वयोरेव तीव्रतरतीव्रतम इति च संज्ञेयम् ।
वं सति गमयोरपि संज्ञात्रये प्राप्ते आह । परं ता इति । परंतु ताः
ज्ञा यथायोग्यं यथार्हं गस्य मस्य च पट्श्रुतिकत्वे तीव्रतम इत्ये-
व संज्ञा । न तु तीव्रतीव्रतरसंज्ञे, गस्य तु चतुःश्रुतिकत्वपंचश्रुति-
त्वयोः अंतरमृदुमसंज्ञयोः प्रवृत्तेः, मस्य तु चतुःश्रुतिकत्वस्या-
यभिचारात् पंचश्रुतिकत्वस्य चासंभवादित्यर्थः ।

# वीणादंडे रागविबोधोक्तशुद्धविकृतस्वरनिदर्शनम् ।

| | शुद्धषड्जतन्त्र्याम् | | |
|---|---|---|---|
| तस्ये स्वरा | | शुद्धस्वरा | विकृतस्वरा |
| शुद्धषड्ज | ४ | शुद्धषड्ज | |
| | ५ | | |
| | ६ | | |
| कोमलरि | ७ | शुद्धऋषभ | |
| | ८ | | तीव्ररि |
| शुद्धरि | ९ | शुद्धगांधार | तीव्रतररि |
| कोमलग | १० | | साधारणग , तीव्रतमरि |
| शुद्धग | ११ | | अंतरग |
| | १२ | | मृदुम |
| शुद्धम | १३ | शुद्धमध्यम | तीव्रतमग |
| | १४ | | |
| तीव्रम | १५ | | तीव्रतमम |
| | १६ | | मृदुप |
| शुद्धप | १७ | शुद्धपंचम | |
| | १८ | | |
| | १९ | | |
| कोमलध | २० | शुद्धधैवत | |
| | २१ | | तीव्रध |
| शुद्धध | २२ | शुद्धनिषाद | तीव्रतरध |
| कोमलनि | १ | | कैशिकनि , तीव्रतमध |
| शुद्धनि | २ | | काकलीनि |
| | ३ | | मृदुस |
| शुद्धषड्ज | ४ | शुद्धषड्ज | |
| | | ७ | १५ |

## चतुर्दंडिप्रकाशिकायां श्रुतिस्वरनिर्णयः ।

श्रुतिर्नाम भवेन्नादविशेषः स्वरकारणम् ।
ननु नास्ति स्वरश्रुत्योर्भेदो नादैकरूपयोः ॥ १२ ॥
विद्यते परिणामित्वपरिणामत्वसंभवः ।
अस्तिभेदस्तयोर्यद्वत् स्वर्णटंककिरीटयोः ॥ १३ ॥
द्वाविंशतिरिति प्रोक्ताः श्रुतयो भरतादिभिः ।
ताश्च वीणाप्रसिद्धेषु सुस्पष्टं विभजामहे ॥ १४ ॥
स्वरेषु शुद्धविकृतभेदाख्यद्वादशात्मसु ।
तथा हि शुद्धऋषभे श्रुतयस्तिस्र ईरिताः ॥ १५ ॥
ततोऽपि शुद्धगांधारे श्रुती द्वे समुपाहृते ।
चतस्रः श्रुतयः शुद्धमध्यमे समुदाहृताः ॥ १६ ॥
स्यात्साधारणगांधारस्तस्याद्यां श्रुतिमाश्रितः ।
तस्यैव समुपादाय द्वितीयकतृतीयके ॥ १७ ॥
श्रुती द्विश्रुतिकः प्रोक्तो गांधारोऽन्तरनामकः ।
दत्वा साधारणाख्याय गांधारायादिमां श्रुतिम् ॥ १८ ॥
द्वितीयां च तृतीयां चान्तरगांधारसंज्ञके ।
तत्रैकश्रुतिको जातो मध्यमोऽयं चतुःश्रुतिः ॥ १९ ॥
चतस्रः श्रुतयः प्रोक्ताः पंचमे गीतवेदिभिः ।
आदायाद्यां द्वितीयां च तृतीयामपि तच्छ्रुतिम् २० ॥
वराळीमध्यमः प्रोक्तः श्रुतित्रयसमन्वितः ।
वराळीमध्यमाय त्रिश्रुतीर्दत्वा तु पंचमः ॥ २१ ॥
श्रुत्यैकया युतो जातो भवन्नपि चतुःश्रुतिः ।
तिस्रः सांगीतकैः प्रोक्ताः श्रुतयः शुद्धधैवते ॥ २२ ॥

स्वरे शुद्धनिषादाख्ये द्वे श्रुती समुदाहृते ।
चतस्रः श्रुतयः षड्जे तस्यादायादिमां श्रुतिम् ॥ २३ ॥
कैशिक्याख्यनिषादोऽयमेकश्रुतिरुदाहृतः ।
द्वितीयीकतृतीयाख्यतच्छ्रुतिभ्यां समन्वितः ॥ २४ ॥
काकल्याख्यनिषादोऽयं द्विश्रुतिः कथ्यते बुधैः ।
तत्कैशिकनिषादाय श्रुतिमेकां श्रुतिद्वयीम् ॥ २५ ॥
काकल्यैव प्रदायास्ते षड्ज एकश्रुतिः स्वयम् ॥
द्वाविंशतिर्विभज्यैवं श्रुतयो दर्शिता मया ॥ २६ ॥

---

तत्र शुद्धस्वराः सप्त मुखारीमात्रभासकाः ।
चतुश्चतुश्चतुश्चैव षड्जमध्यमपंचमाः ॥ २७ ॥
द्वे द्वे निषादगांधारौ त्रिस्त्री रिषभधैवतौ ।
इत्येवं भरतश्लोकसंख्यातश्रुतिशालिनः ॥ २८ ॥
विकृतास्तु स्वराः पंचेत्यस्माभिरवधार्यते ।
रत्नाकरे तु निःशंको विकृतान् द्वादशस्वरान् ॥ २९ ॥
अब्रवीत्केचन पुनस्सप्ताहुर्विकृतस्वरान् ।
सर्वमेतत्समालोच्य लक्ष्यमार्गानुसारतः ॥ ३० ॥
स्वराः पंचैव विकृता इति सिद्धांतितं मया ।
तांश्च पंच स्वरान् सम्यग्विविच्य व्याहरामहे ॥ ३१ ॥
साधारणश्च गांधारो गांधारश्चान्तराभिधः ।
द्वौ तौ च मध्यमक्षेत्रसंभूतौ विकृतस्वरौ ॥ ३२ ॥
वराळीमध्यमश्चैकः पंचमक्षेत्रसंभवः ।
षड्जक्षेत्रसमुद्भूतौ कैशिकीकाकलीस्वरौ ॥ ३३ ॥
एवमेते स्वराः पंच विकृता इति निर्णयः ।
आहत्य शुद्धविकृताः स्वरा द्वादश कीर्तिताः ॥ ३४ ॥

---

श्रुतिस्थाननिश्चयार्थं ग्रंथकारः सुलभमुपायं सूचयति ।

---

ता एताः श्रुतिवीणायां प्रकाश्यन्ते पृथक्तया ।
श्रुतिवीणाप्रकारस्तु वर्ण्यतामिति चेत्तथा ॥ ३५ ॥
मध्यमेलाख्यवीणायां तत्स्वरूपं निरूप्यते ।
मध्यमेलाख्यवीणायां मध्यस्थानस्थपर्वसु ॥ ३६ ॥
द्वादशस्वपि चैतेषु श्रुतिव्यंजकपर्वणाम् ।
विनिवेशक्रमं ब्रूमः श्रुतिभेदैकबोधकम् ॥ ३७ ॥
मेरुपकंठगं शुद्धर्षभक्षेत्रांतरं त्रिधा ।
विभज्यर्षभपर्वेन्दुदृश्यमानं जिनान्तरे ॥ ३८ ॥
पर्वद्वयनिवेशे स्युस्तिस्रोऽपि श्रुतयः स्फुटाः ।
शुद्धर्षभे तथा शुद्धगांधारक्षेत्रकं द्विधा ॥ ३९ ॥
विभज्याथ यथावस्थं पर्व गांधारभासकम् ।
व्यपेक्ष्य मध्ये पर्वैक यदा परिनिवेश्यते ॥ ४० ॥
गांधारस्य तदानीं स्यात् श्रुतिद्वयमतिस्फुटम् ।
मध्यमस्य स्वरस्योक्ताश्चतस्रः श्रुतयः स्फुटाः ॥ ४१ ॥
तत्र साधारणे स्पष्टा गांधारे श्रुतिरेकिका ॥
अंतराख्यानगांधारक्षेत्र द्वेधा विभज्य तु ॥ ४२ ॥
एकस्य पर्वणो मध्ये तयोर्यदि निवेशनम् ॥
जायतेऽन्तरगांधारे श्रुतिद्वयमतिस्फुटम् ॥
मध्यमे श्रुतिरेकेति स्पष्टं श्रुतिचतुष्टयम् ॥ ४३ ॥

---

इत्येवं मध्यमेलायां श्रुतिवीणाप्रकारतः ।
द्वाविंशतिश्रुतीनांच विभागक्रम ईरितः ॥ ४४ ॥

---

## संगीतसारामृते स्वरवीणानिदर्शनम् ।

अत्र श्रुतिप्रकरणे श्रुतिवीणोदिता मया ।
रत्नाकरानुसारेण स्वरवीणोच्यतेऽधुना ॥ ४५ ॥
स्वरैर्या वाद्यते वीणा स्वरवीणेति गीयते ।
स्वराः षड्जादयः शुद्धाः सप्तैव परिकीर्तिताः ॥ ४६ ॥
विकृताः पंच मिलिता द्वादश प्रतिपादिताः ।
विभान्ति यत्र सा वीणा स्वरवीणेति निश्चयः ॥ ४७ ॥
अथास्यां पर्वसंवेशं वक्ष्ये वैणिकसंमतम् ।
सारण्या मध्यषड्जाख्यतंत्र्या शुद्धर्षभो यथा ॥ ४८ ॥
स्यात्तथा सारिका स्थाप्या प्रथमाऽथ द्वितीयिका ।
तत्तंत्र्या शुद्धगांधारसिध्यै स्थाप्या च सारिका ॥ ४९ ॥
तृतीया सारिका स्थाप्या तया तंत्र्या यथा स्फुटः ।
स्यात् साधारणगांधारः स्थाप्या सारी चतुर्थिका ॥ ५० ॥
अन्तराख्यानगांधारस्तया तंत्र्या यथा भवेत् ।
शुद्धमध्यमसिध्यर्थं पंचमीं सारिकां ततः ॥ ५१ ॥
निवेश्यैव तया तंत्र्या षष्ठी स्थाप्याऽथ सारिका ।
यथा व्यक्तस्तया तंत्र्या वराळीमध्यमस्तथा ॥ ५२ ॥
मध्यस्थानस्वरा ह्येते जाताः स्युः षट्सु पर्वसु ।
मंद्रपंचमशोभिन्या तंत्र्या चाथ तृतीयया ॥ ५३ ॥
शुद्धश्च धैवतः शुद्धनिषादश्च ततःपरम् ।
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ॥ ५४ ॥
षड्जः शुद्धर्षभश्चेति षट्स्वराः षट्सु पर्वसु ॥ ५५ ॥

स्वराः स्युः श्रुतिनिष्पन्नाः श्रुतिन्यूनाधिकत्वतः ।
एते बहुविधाः शुद्धा विकृता व्यावहारिकाः ॥ ५६ ॥

इति त्रिधा निगद्यन्ते तान् ब्रूमोऽत्र विशेषतः ।
षड्जाद्याः शुद्धशब्दाद्याः स्वराः शुद्धा इतीरिताः ॥ ५७ ॥

शुद्धषड्जस्तथा शुद्धर्षभ इत्यादिनामभिः ।
अत्रैते व्यवहर्तव्या विकृतास्तत्तदाख्यया ॥ ५८ ॥

ताभिस्तेऽत्र निरूप्यन्ते क्रमशो विकृताः स्वराः ।
साधारणाख्यगांधारोऽन्तरगांधार एव च ॥ ५९ ॥

पंचमोपान्त्यश्रुतौ विकृतपंचममध्यमः ।
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ।
पंचैते विकृताः शुद्धैः स्वरैर्द्वादश कीर्तिताः ॥ ६० ॥

---

उपर्युक्तानां केषांचित्स्वराणां व्यवहारप्रसिद्धसंज्ञांतराणि ।

---

विहाय स्वस्वसंज्ञा ये स्वरा अन्योन्यसंज्ञकाः ।
तेषां नामांतराण्यत्र विहितानीह यथा ॥ ६१ ॥

शुद्धगांधार एवायं पंचश्रुत्यृषभाह्वयः ।
साधारणाख्यगांधारः षट्श्रुत्यृषभसंज्ञकः ॥ ६२ ॥

तथा शुद्धनिषादोऽपि स्यात्पंचश्रुतिधैवतः ।
स्यात्कैशिकनिषादोऽपि तथा षट्श्रुतिधैवतः ॥
लक्ष्यानुसारतस्त्वैतल्लौकिकं सुखबोधकम् ॥ ६३ ॥

## उपर्युक्तपर्वसंवेशनिदर्शनं वीणादंडे ।

पंचमतंत्री

षड्जतंत्री

| | | |
|---|---|---|
| १ | १ | प्रथमासारी. |
| २ | २ | द्वितीयासारी |
| ३ | ३ | तृतीयासारी. |
| ४ | ४ | चतुर्थिकासारी. |
| ५ | ५ | पंचमीसारी. |
| ६ | ६ | षष्ठीसारी. |

स्पष्टीकरणम् ।

षड्जतंत्र्यां षट्सारिकासु क्रमेण स्वरा.—१ शुद्धऋषभः, २ शुद्धगांधारः, ३ साधारणगांधारः, ४ अंतरगांधार; ५ शुद्धमध्यमः ६ वराळीमध्यमः,

पंचमाख्यतंत्र्यां षट्सारिकासु क्रमेण स्वरा.—१ शुद्धधैवतः, २ शुद्धनिषादः, ३ कैशिकनिषादः, ४ काकलीनिषादः, ५ शुद्धषड्जः, ६ शुद्धऋषभः

# वीणादंडे चतुर्दंडिप्रकाशिकोक्तशुद्धविकृतस्वरनिर्दशनम् ।

| लक्ष्ये स्वराः | शुद्धषड्जतंत्री. | शुद्धस्वराः | विकृतस्वराः |
|---|---|---|---|
| शुद्धषड्जः | ४ | शुद्धषड्जः | |
| | ५ | | |
| | ६ | | |
| कोमलरिः | ७ | शुद्धर्षभः | |
| | ८ | | |
| शुद्धरिः | ९ | शुद्धगांधारः | पंचश्रुतिरिः |
| कोमलगः | १० | ... ... ... ... | साधारणगः, षट्श्रुतिरिः |
| | ११ | | |
| शुद्धगः | १२ | ... ... ... ... | अंतरगः |
| शुद्धमः | १३ | शुद्धमध्यमः | |
| | १४ | | |
| | १५ | | |
| तीव्रमः | १६ | ... ... ... ... | वराळीमः |
| शुद्धपः | १७ | शुद्धपंचमः | |
| | १८ | | |
| | १९ | | |
| कोमलधः | २० | शुद्धधैवतः | |
| | २१ | | |
| शुद्धधः | २२ | शुद्धनिषादः | पंचश्रुतिधः |
| कोमलनिः | १ | ... ... ... ... | कैशिकनिः, षट्श्रुतिधः |
| | २ | | |
| शुद्धनिः | ३ | ... ... ... ... | काकलीनिः |
| शुद्धषड्जः | ४ | शुद्धषड्जः | |
| | | ७ | ५ |

## वीणादंडे संगीतसारामृतोक्तशुद्धविकृतस्वरनिदर्शनम् ।

| | शुद्धषड्जतंत्र्याम् | | |
|---|---|---|---|
| लक्ष्ये स्वराः | | शुद्धस्वराः | विकृतस्वराः |
| शुद्धषड्जः | | शुद्धषड्जः | |
| कोमलरिः | | शुद्धऋषभः | |
| शुद्धरिः | | शुद्धगांधारः | पंचश्रुतिरिः |
| कोमलगः | | ... ... ... ... | साधारणगः, षट्श्रुतिरिः |
| शुद्धगः | | ... ... ... ... | अंतरगः |
| शुद्धमः | | शुद्धमध्यमः | |
| तीव्रमः | | ... ... ... ... | विकृतपंचमः |
| शुद्धपः | | शुद्धपंचमः | |
| कोमलधः | | शुद्धधैवतः | |
| शुद्धधः | | शुद्धनिषादः | पंचश्रुतिधः |
| कोमलनि | | ... ... ... ... | कैशिकनिः, षट्श्रुतिधः |
| शुद्धनिः | | ... ... ... ... | काकलीनिः |
| शुद्धषड्जः | | शुद्धषड्जः | |

लोचनकृतरागतरंगिण्यां विकृतस्वरनिरूपणम् ।

" स्वस्वशेषश्रुतिं त्यक्त्वा यदा रिषभधैवतौ ।
गीयेते गुणिभिः सर्वैस्तदा तौ कोमलौ मतौ ॥ ६४ ॥
गृह्णाति मध्यमस्यापि गांधारः प्रथमां श्रुतिम् ।
यदा तदा जनैरेष तीव्र इत्यभिधीयते ॥ ६५ ॥
द्वितीयामपि चेदेवं तदा तीव्रतरः स्मृतः ।
तृतीयामपि चेदेवं तदा तीव्रतमः स्मृतः ॥ ६६ ॥
चतुर्थीमपि चेदेवमतितीव्रतमः स्मृतः ।
अतितीव्रतमो गस्तु सारंगे परिगीयते ॥ ६७ ॥
षड्जस्य च निषादश्चेद् गृह्णाति प्रथमां श्रुतिम् ।
तदा संगीतिभिः सोऽपि तीव्र इत्यभिधीयते ॥ ६८ ॥
द्वितीयामपि चेदेवं तदा तीव्रतरः स्मृतः ।
तृतीयामपि चेदेवं तदा तीव्रतमः स्मृतः ॥ ६९ ॥
षड्जस्य द्वे श्रुती गृह्णन् निषादः काकली स्मृतः ।
तीव्रतरे निषादेऽसावेव गेयो विचक्षणैः ॥ ७० ॥ "

---

संगीतकौतुके ग्रंथे हृदयेशेन धीमता ।
तरंगिण्यनुवादः स्यात्कृतः स्वस्वरनिर्णये ॥ ७१ ॥
हृदयाद्यप्रकाशाख्ये ग्रंथे तेन पुनः क्वचित् ।
पारिजातप्रबंधोक्ता प्रणाली स्याद् समादृता ॥ ७२ ॥

हृदयप्रकाशे स्वरनिर्णयः ।

" स्वराश्च षड्जऋषभौ गांधारो मध्यमस्तथा ।
पंचमो धैवतश्चैव निषाद इति सप्त ते ॥ ७३ ॥
स्वराणां व्यवहारोऽत्र प्राग्वदाद्याक्षरैः कृतः ।
द्विश्रुतिर्गो निषादश्च प्रत्येकं त्रिश्रुती रिधौ ॥ ७४ ॥

चतुःश्रुतिसमायुक्ताः पूर्ववत्समपाः स्मृताः ।
स्वान्त्यश्रुतिस्थिताः शुद्धाः स्युरन्ये विकृताः स्वराः ॥७५॥
श्रुतिमाद्यादितुर्यान्ताः स्वरा ये चोर्ध्ववर्तिनः ।
तीव्रस्तीव्रतरस्तीव्रतमा भवन्ति हि क्रमात् ॥ ७६ ॥
स्वोपान्त्यश्रुतिवर्ती तु कोमलः परिकीर्तितः ।
निस्तीव्रतरसंज्ञस्तु काकलीत्यपि कथ्यते ॥ ७७ ॥
सपयोर्यदि गृह्णीतस्तिस्रस्तिस्रः श्रुतीर्निमौ ।
मृदुसो मृदुपश्चेति तदाख्ये सपयोर्मते ॥ ७८ ॥"

अथ शुद्धादिस्वरस्थाननिरूपणं वीणायाम् ।

---

" ध्वन्यवच्छिन्नवीणादेर्मध्ये तारससंस्थितिः ।
द्व्यंशितस्याद्यभागान्ते मध्यमस्य च पंचमम् ॥ ७९ ॥
मध्यमं षड्जयोर्गं तु सपयोर्मध्यमानयेत् ।
द्व्यंशितस्य तयोर्मध्यस्याद्यांशान्ते तथार्षभम् ॥ ८० ॥
तथैव धैवतं मध्ये सपयोः स्थापयेद्बुधः ।
तत्र भागद्वयं त्यक्त्वा निषादाख्यं स्वरं नयेत् ॥ ८१ ॥

इति शुद्धस्वराः ।

भागत्रयोदिते मध्ये मेरोः ऋषभसंज्ञिनः ।
भागद्वयोत्तरं मेरोः कुर्यात् कोमलरिस्वरम् ॥ ८२ ॥
मेरुधैवतयोर्मध्ये तीव्रगांधारमाचरेत् ।
भागत्रयविशिष्टेऽस्मिन्स्तीव्रगांधारषड्जयोः ॥ ८३ ॥
पूर्वभागोत्तरं मध्ये मं तीव्रतरमाचरेत् ।
भागत्रयान्विते मध्ये पंचमोत्तरषड्जयोः ॥ ८४ ॥
कोमलो धैवतः स्थाप्यः पूर्वभागे विवेकिभिः ।

तथैव धसयोर्मध्ये भागत्रयसमन्विते ।
पूर्वभागद्वयादूर्ध्वं निषादं तीव्रमाचरेत् ॥ ८५ ॥ "

इति विकृता ।

वीणादंडे तरंगिणीहृदयकौतुकहृदयप्रकाशादिग्रंथोक्तस्वरनिदर्शनम् ।

| | शुद्धषड्जत याम् | | |
|---|---|---|---|
| लक्ष्ये स्वरा | | शुद्धस्वरा | विकृतस्वरा |
| शुद्धषड्ज | ४ | शुद्धषड्ज | |
| | ५ | | |
| कोमलरि | ६ | | कोमलरि |
| शुद्धऋषभ | ७ | शुद्धऋषभ | |
| | ८ | | |
| कोमलगांधार | ९ | शुद्धगांधार | |
| | १० | | तीव्रगांधार |
| शुद्धगांधार | ११ | | तीव्रतरग |
| | १२ | | तीव्रतमग |
| शुद्धमध्यम | १३ | शुद्धमध्यम | अतितीव्रतमग |
| | १४ | | |
| तीव्रमध्यम | १५ | •• • | तीव्रतरम |
| | १६ | | |
| शुद्धपंचम | १७ | शुद्धपंचम | |
| | १८ | | |
| कोमलध | १९ | | कोमलध |
| शुद्धधैवत | २० | शुद्धधैवत | |
| | २१ | | |
| कोमलनिषाद | २२ | शुद्धनिषाद | |
| | १ | | तीव्र नि |
| शुद्धनिषाद | २ | | तीव्रतरनि· काकलीनिः |
| | ३ | | तीव्रतमनिः, |
| शुद्धषड्ज | ४ | शुद्धषड्ज | |

संगीतपारिजातोक्तशुद्धविकृतस्वराः ।

" शुद्धाः सप्त विकाराख्या ह्यधिका विंशतिर्मताः ।
एकोनत्रिंशदुच्यन्ते ते सर्वे मिलिताः स्वराः ॥ ८६ ॥
सरी गमौ पधौ निश्च स्वरा इत्यपि संज्ञिताः ।
चतुःश्रुतिसमायुक्ताः स्वराः स्युः समपाभिधाः ॥ ८७ ॥
गनी श्रुतिद्वयोपेतौ रिधौ त्रिश्रुतिकौ मतौ ।
स्वरः स्वोत्तरगामी चेत्तीव्रादिवचनोदितः ॥ ८८ ॥
स्वरोऽग्रिमश्रुतिं याति तीव्रसंज्ञां प्रयात्यसौ ।
स्वरोऽग्रिमश्रुती याति तदा तीव्रतरो भवेत् ॥ ८९ ॥
स्वरोऽग्रिमश्रुतीर्याति तर्हि तीव्रतमः स्मृतः ।
चतस्रः श्रुतयो यस्मिन्नधिकाः स्युर्यदा स्वरः ॥ ९० ॥
तदातितीव्रतमाख्यां प्राप्नोतीति बुधा जगुः ।
स्वरः पश्चान्निवृत्तश्चेत् कोमलादिभिरीरितः ॥ ९१ ॥
एकश्रुतिपरित्यागात् स्वरः कोमलसंज्ञकः ।
श्रुतिद्वयपरित्यागात् पूर्वशब्देन मन्यते ॥ ९२ ॥ "

तथापि रागलक्षणनिरूपणे ।

" पूर्वकोमलतीव्रैश्च तथा तीव्रतरेण च ।
अतितीव्रतमेनैव सर्वे रागा उदीरिताः ॥ ९३ ॥
रिं च पूर्वं तथा तीव्रं तीव्रतरं च गस्वरम् ।
तीव्रतमं तथा गं च मं च तीव्रं स्वरं तथा ॥ ९४ ॥
मं च तीव्रतमं धं च पूर्वाख्यं तीव्रसंज्ञितम् ।
तीव्रतरं निषादं च तीव्रतमं च निस्वरम् ॥
इत्येतांश्च दश त्यक्त्वा रागलक्षणमीरितम् ॥ ९५ ॥ "

पुनः ।

" ऋषभः शुद्ध एवासौ पूर्वगांधार इष्यते ।
गांधारः शुद्ध एवासौ रिस्तीव्रतर इष्यते ॥ ९६ ॥
अतितीव्रतमो गः स्यान्मध्यमः शुद्ध एव हि ।
धैवतः शुद्ध एवासौ निषादः पूर्वसंज्ञकः ॥ ९७ ॥
निषादः शुद्ध एवासौ धस्तीव्रतर इष्यते ।
एवं स्यात् सर्वयंत्रेषु स्वरस्थापनलक्षणम् ॥ ९८ ॥ "

---

बहवः स्युः स्वराः प्रोक्ता अहोबलेन यद्यपि ।
द्वादशैव प्रयुक्तास्ते तेन रागाविलक्षणे ॥ ९९ ॥

वीणादंडे स्वरस्थापनप्रकारः ।

" स्वरस्य हेतुभूताया वीणायाश्चाक्षुषत्वतः ।
तत्र स्वरविबोधार्थं स्थानलक्षणमुच्यते ॥ ३०० ॥
ध्वन्यवच्छिन्नवीणायां मध्ये तारकसः स्थितः ।
उभयोः षड्जयोर्मध्ये मध्यमं स्वरमाचरेत् ॥ १ ॥
त्रिभागात्मकवीणायां पंचमः स्यात्तदग्रिमे ।
षड्जपंचमयोर्मध्ये गांधारस्य स्थितिर्भवेत् ॥ २ ॥
सपयोः पूर्वभागे च स्थापनीयोऽथ रिस्वरः ।
सपयोर्मध्यदेशे तु धैवतं स्वरमाचरेत् ॥
तत्रांशद्वयसंत्यागान्निषादस्य स्थितिर्भवेत् ॥ ३ ॥ "

इति शुद्धस्वराः ।

" भागत्रयान्विते मध्ये मेरोः ऋषभसंज्ञितात् ।
भागद्वयोत्तरं मेरोः कुर्यात् कोमलरिस्वरम् ॥ ४ ॥

मेरुधैवतयोर्मध्ये तीव्रगांधारमाचरेत् ।
भागत्रयविशिष्टेऽस्मिंस्तीव्रगांधारषड्जयोः ॥ ५ ॥
पूर्वभागोत्तरं मध्ये मं तीव्रतरमाचरेत् ।
भागत्रयान्विते मध्ये पंचमोत्तरषड्जयोः ॥ ६ ॥
कोमलो धैवतः स्थाप्यः पूर्वभागे मनीषिभिः ।
तथैव धसयोर्मध्ये भागत्रयसमन्विते ॥
पूर्वभागद्वयादूर्ध्वं निषादं तीव्रमाचरेत् ॥ ७ ॥ ”

इति पंच विकृताः ।

“ मध्ये पूर्वोत्तराबद्धवीणायां गात्र एव वा ।
षड्जपंचमभावेन श्रुतीर्द्वाविंशतिं जगुः ॥ ८ ॥ ”

---

रागतत्त्वविबोधे हि श्रीनिवासेन धीमता ।
अहोबलमतस्यैवानुवादः स्यात् समाहृतः ॥ ९ ॥

---

## संगीतपारिजातोक्तशुद्धविकृतस्वराणां वीणादण्डे निदर्शनम् ।

| | शुद्धमध्यमतन्त्र्याम् | |
|---|---|---|
| हस्येस्वरा | शुद्धस्वरा | विकृतस्वरा |
| शुद्धमध्यम | शुद्धमध्यम | अतितीव्रतमग |
| | | तीव्रम |
| तीव्रम | | तीव्रतरम |
| | | तीव्रतमम |
| शुद्धप | शुद्धपञ्चम | |
| | | पूर्वध |
| कोमलध | | कोमलध |
| शुद्धध | शुद्धधैवत | पूर्वनिषाद |
| | | तीव्रध , , कोमलनि |
| कोमलनि | शुद्धनिषाद | तीव्रतरध |
| | | तीव्रनि |
| तीव्रनि | | तीव्रतरनि |
| | | तीव्रतमनि |
| शुद्धषड्ज | शुद्धषड्ज | |
| | | पूर्वरि |
| कोमलरि | | कोमलरि |
| शुद्धरि | शुद्धऋषभ | पूर्वग |
| | | तीव्ररि , कोमलग |
| कोमलग | शुद्धगान्धार | तीव्रतररि |
| | | तीव्रग |
| तीव्रग | | तीव्रतरग |
| | | तीव्रतमग |
| शुद्धम | शुद्धमध्यम | अतितीव्रतमग |
| | ७ | २२ |

पुंडरीकविठ्ठलकृतसद्रागचंद्रोदये शुद्धविकृतस्वरनिर्णयः।

" स्वराः श्रुतिभ्यः प्रभवन्ति ते तु
   षड्जादयः सप्त यथाक्रमेण ।
वेदाग्निपक्षाब्धिपयोधिवन्हि–
   पक्षांतिमश्रुत्यधिसंश्रिताः स्युः ॥ १० ॥
षड्जाभिधानस्त्वृषभस्ततः स्याद्
   गांधारको मध्यमपंचमौ च ।
ततः परं धैवतको निषाद
   इति स्वराः सप्त मता मुनींद्रैः ॥ ११ ॥
शुद्धाः स्वरा ये तु भवन्ति सप्त
   तज्जान् विकारान् प्रवदामि सप्त ।
स्वोपान्तिकश्रुत्यधिसंश्रितः स्यात्
   षड्जाभिधानो लघुषड्जनामा ॥ १२ ॥
एवं मपौ स्तो लघुशब्दपूर्वौ
   साधारणो गः प्रथमश्रुतिस्थः ।
मस्य द्वितीयश्रुतिगोऽन्तरः स्यात्
   षड्जाह्वयस्य प्रथमश्रुतिस्थः ॥ १३ ॥
तथा द्वितीयश्रुतिवर्तमानो
   निः कैशिकी काकलिनामधेयः ।
स्वस्थानकस्थेषु च तेषु नेष्टाः
   स्वरेषु भेदा विकृता मुनींद्रैः ॥ १४ ॥
सोपाददे धस्य विकारभेदं
   निःशंकसूरिः खलु कूटताने ।
सर्वे युतास्ते विकृताश्च शुद्धा–
   श्चतुर्दशैवेति मतं मदीयम् ॥ १५ ॥ "
लक्ष्यगतसंज्ञान्तराणि ।

" अथो रिधावाद्यगनिश्रुतिस्थौ
लक्ष्येषु वेदश्रुतिकौ भवेताम् ।
मः पंचमाद्यां श्रुतिमेत्य लक्ष्ये
क्वचिच्च पंचश्रुतितां प्रयाति ॥ १६ ॥ "

---

## वीणादंडे सद्रागचंद्रोदयोक्तस्वरनिदर्शनम् ।

शुद्धषड्जत ग्राम्

| उत्पेस्वरा | शुद्धस्वरा | विकृतस्वरा |
|---|---|---|
| शुद्धषड्ज | शुद्धषड्ज | |
| कोमलरिः | शुद्धऋषभ | |
| | | चतुःश्रुतिरि |
| शुद्धरि | शुद्धगांधार | |
| | | साधारणगांधार |
| शुद्धग | | अंतरगांधार |
| | | लघुमध्यम |
| शुद्धम | शुद्धमध्यम | |
| | | पंचश्रुतिम |
| तीव्रम | | लघुपंचम |
| शुद्धप | शुद्धपंचम | |
| कोमलध | शुद्धधैवत | |
| | | चतुःश्रुतिध |
| शुद्धध | शुद्धनिषादः | |
| कोमलनिषादः | | कैशिकनिषाद |
| शुद्धनि | • | काकलीनिषादः |
| | | लघुषड्जः |
| शुद्धषड्जः | शुद्धषड्ज | |
| | ७ | ७ |

पुंडरीकविठ्ठलकृतरागमालायां शुद्धविकृतस्वरनिर्णयः ।

---

" द्वाविंशतिः प्रतिस्थानं सोपानाकारवत् क्रमात् ।
प्रभवंत्युच्चोच्चतराः श्रुतयः श्राव्यमात्रतः ॥ १७ ॥
रागादिव्यवहाराय तासु सप्त स्वराः स्थिताः ।
षड्जश्च ऋषभश्चैव गांधारो मध्यमस्तथा ॥ १८ ॥
पंचमो धैवतश्चाथ निषादश्चेत्यनुक्रमात् ।
तेषां संज्ञाः सरिगमपधनीत्यपरा मताः ॥ १९ ॥
वेदाचलांकश्रुतिषु त्रयोदश्यां श्रुतौ ततः ।
सप्तदश्यां च विंश्यां च द्वाविंश्यां च श्रुतौ क्रमात् ॥२० ॥
षड्जादीनां स्थितिः प्रोक्ता प्रथमा भरतादिभिः ।
असप्ताः पूर्वपूर्वास्ते संचरंत्युत्तरोत्तरम् ॥ २१ ॥
त्रिस्त्रिर्गतीस्ते प्रत्येकं याति गश्च चतुर्गतीः ।
यद्यद्रागोपयोगः स्यात्तत्तदिच्छागतिर्भवेत् ॥ २२ ॥
गन्योर्गती द्वितीये चांतरकाकलिनौ स्मृतौ ।
पंचम्यष्टादशी षष्ठी तथा चैकोनविंशतिः ॥ २३ ॥
चतस्रः श्रुतयश्चैता रागाद्यैरप्रयोजकाः ।
शेषा अष्टादशैव स्युः श्रुतयः स्वरबोधकाः ॥ २४ ॥
न्यूनाधिकैकगतिका मंद्रतारस्वरा यदि ।
न रागहानिकाः सर्वे स्पष्टता मध्यसप्तके ॥ २५ ॥ "

---

## वीणादंडे रागमालोक्तशुद्धविकृतस्वरनिदर्शनम् ।

षड्जतोऽग्राम्

| लक्ष्ये स्वराः | शुद्धस्वराः | विकृतस्वराः |
|---|---|---|
| शुद्धषड्जः | शुद्धषड्जः | |
| कोमलरिः | शुद्धऋषभः | |
| | ... ... ... | एकगतिकरिः, ( त्रिधुगतिकरिः, ) |
| शुद्धरिः | शुद्धगांधारः | द्विगतिकरिः |
| कोमलगः | ... ... ... | एकगतिकगः (प्रथमगतिकगः , विधुगतिकगः) |
| शुद्धगः | ... ... | द्विगतिकगः, ( नेत्रगतिकगः, पक्षगतिकगः ) |
| | ... ... | त्रिगतिकगः, (वन्हिगतिकगः, अनलगतिगः, गुणगतिगः ) |
| शुद्धमः | शुद्धमध्यमः | चतुर्गतिगः |
| तीव्रमः | ... ... | त्रिगतिकमः |
| शुद्धपः | शुद्धपंचमः | |
| कोमलधः | शुद्धधैवतः | |
| | ... ... | एकगतिकधः |
| शुद्धधः | शुद्धनिषाद | द्विगतिकधः |
| कोमलनि | ... ... ... | एकगतिकनि |
| शुद्धनिः | ... ... | द्विगतिकनि |
| | ... ... ... | त्रिगतिकनि |
| | शुद्धषड्जः | |

## पुंडरीककृतरागमंजर्यां स्वरनिर्णयः ।

" तीव्रा कुमुद्वती मंदा छंदोवती दयावती ।
रंजनी रतिका रौद्री क्रोधी वज्री प्रसारिणी ॥ २६ ॥
प्रीतिर्मृजा क्षिती रक्ता संदीपिन्यथ लापिनी ।
मदंती रोहिणी रम्या चोग्रा क्षोभिणिकेति च ॥
श्रुतिनामानि ख्यातानि पूर्वाचार्यैः क्रमादिति ॥ २७ ॥
रागादिव्यवहाराय तासु सप्त स्वराः स्थिताः ।
षड्जश्च ऋषभश्चैव गांधारो मध्यमस्तथा ॥ २८ ॥
पंचमो धैवतश्चाथ निषादश्चेत्यनुक्रमात् ।
तेषां संज्ञाः सरिगमपधनीत्यपरा मताः ॥ २९ ॥
वेदाचलांकश्रुतिषु त्रयोदश्यां श्रुतौ ततः ।
सप्तदश्यां च विंश्यां च द्वाविंश्यां च श्रुतौ क्रमात् ॥ ३० ॥
षड्जादीनां स्थितिः प्रोक्ता प्रथमा भरतादिभिः ।
असपाः पूर्वपूर्वस्मात्संचरंत्युत्तरोत्तरम् ॥ ३१ ॥
त्रिस्त्रिर्गतीस्ते प्रत्येकं याति गश्च चतुर्गतीः ।
यद्यद्रागोपयोगः स्यात्तत्तदिच्छागतिर्भवेत् ॥ ३२ ॥
साधारणः कैशिकी चान्तरकाकलिनौ तथा ।
साधारणः कैशिकी द्वौ क्रमाद्गतिगनिक्रमः ॥ ३३ ॥
ऊर्ध्वसलस्तु गांधारो मध्यमोपरि संस्थितः ।
मस्य त्रिगतिभेदाश्च मनुः पक्षान्तिको नृपः ॥ ३४ ॥
अथ कैशिकिनावाद्यावूर्ध्वसलौ द्वितीयकौ ।
अत्युच्चूंसलनामानौ तृतीयगतिकौ रिधौ ॥
इत्येवं स्वरभेदाश्च स्थाने स्थाने भवन्ति हि ॥ ३५ ॥ "

## वीणादंडे मंजर्युक्तशुद्धविकृतस्वरनिदर्शनम् ।

शुद्धषड्जतन्त्र्याम्

| लक्ष्ये स्वराः | शुद्ध स्वराः | विकृतस्वराः |
|---|---|---|
| शुद्धषड्ज | शुद्धषड्ज | |
| कोमलरि | शुद्धऋषभ | |
| | | एकगतिकरि |
| शुद्धरि | शुद्धगांधार | द्विगतिकरि |
| कोमलग | | साधारणग , अथवा त्रिगतिकरि , एकगतिकग |
| शुद्धग | | अंतरगांधार , द्विगतिकग |
| | | त्रिगतिकग |
| शुद्धम | शुद्धमध्यम | चतुर्गतिकग |
| | | एकगतिकम |
| | | द्विगतिकम |
| तीव्रम | | त्रिगतिकम |
| शुद्धप | शुद्धपंचम | |
| कोमलध | शुद्धधैवत | |
| | | एकगतिकध , |
| शुद्धध | शुद्धनिषादः | द्विगतिकध |
| कोमलनि | | कैशिकनि , अथवा एकगतिकनि , त्रिगतिकध |
| शुद्धनि | | काकलीनि , द्विगतिकनि |
| | | त्रिगतिकनि |
| शुद्धषड्ज | शुद्धषड्ज | |

प्रचलितहिंदुस्थानीयपद्धत्यां शुद्धविकृतस्वरसंज्ञाः ।

हिंदुस्थानीयपद्धत्यां लक्ष्यलक्षणकोविदैः ।
सप्त शुद्धास्तथा पंच विकृता निश्चिताः स्वराः ॥ ३६ ॥
संज्ञास्तेषामथो वच्मि लक्ष्यसंगीतगोचराः ।
यतः स्यादागनिर्देशो सर्वेषां सुखबोधनम् ॥ ३७ ॥
शुद्धाः सप्त स्वराः शुद्धपूर्वया तत्तदाख्यया ।
विज्ञेयाः क्रमशः शुद्धषड्जः शुद्धर्षभस्ततः ॥ ३८ ॥
शुद्धगांधार इत्युक्तः शुद्धमध्यम इत्यपि ।
शुद्धपंचम इत्येवं शुद्धधैवत इत्यपि ॥
ततः शुद्धनिषादश्चेत्येवं सप्त स्वराभिधाः ३९ ॥
विकृताः पंच कथ्यंते प्रथमः कोमलर्षभः ।
द्वितीयः कोमलो गः स्यात्तृतीयस्तीव्रमध्यमः ॥ ४० ॥
चतुर्थः कोमलो धाख्यः पंचमः कोमलाख्यनिः ।
आहत्य शुद्धविकृताः स्वरा द्वादश ईरिताः ॥ ४१ ॥

केषांचित् स्वराणां लक्ष्ये नामान्तराणि ।

व्यवहारे तु शुद्धाख्या रिगधनिस्वराः क्वचित् ।
प्राप्नुवन्ति पुनः संज्ञां तीव्रां लक्ष्यज्ञसंमताम् ॥ ४२ ॥
मध्यमः शुद्धएवासौ लक्ष्ये स्यात् कोमलाभिधः ।
परिभाषारहस्यं तत सर्वत्रैव सुसंमतम् ॥ ४३ ॥

विकृतस्वरस्थाननिर्देशः ।

षड्जर्षभकयोर्मध्ये संस्थितः कोमलर्षभः ।
गांधारो रिगयोर्मध्ये संस्थितः कोमलाभिधः ॥ ४४ ॥
मध्यमस्तीव्रसंज्ञोऽसौ मपयोरंतरे स्थितः ।
धपयोरंतरे चैव भवेत् कोमलधैवतः ॥ ४५ ॥

## मूर्छना ।

" क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् ।
मूर्छनेत्युच्यते ग्रामद्वये ताः सप्त सप्त च ॥ ४७ ॥ "

रत्नाकरे ।

प्राक्कालीनेषु ग्रंथेषु मूर्छनाः सप्त कीर्तिताः ।
प्रतिग्रामसमासक्ता याभी रागाः समुत्थिताः ॥ ४८ ॥
भिन्नस्वरं समारभ्य सप्तस्वरव्यवस्थया ।
भवेत् परिस्फुटा तत्र स्वरान्तरविभिन्नता ॥ ४९ ॥
रत्नाकरादिग्रंथेषु मूर्छनाजातियोगतः ।
रागमेलाः समाख्याता रहस्यं तत् सुसंमतम् ॥ ५० ॥
पंडितैर्मध्यकालीनैरहोबलादिभिः पुनः ।
रहस्यं मूर्छनानां तद्विभिन्नं समुदीरितम् ॥ ५१ ॥
मेलः स्यान्मूर्छनाधारो ग्रामाधारा तु मूर्छना ।
स्वरेभ्यो ग्रामसंभूतिः श्रुतयः स्वरजन्मभूः ॥ ५२ ॥
" मेलः स्वरसमूहः स्याद्रागव्यंजनशक्तिमान् ।
श्लिष्टोच्चारणमेवात्र समूहः परिकीर्तितः ॥ ५३ ॥
शुद्धैः स्वरैः समस्तैर्यो युक्तः संपूर्णशब्दभाक् ।
षड्भिः षाडव इत्युक्तः स्वरैः पंचभिरौडुवः ॥ ५४ ॥ "
मेलानुसारतस्तत्र त्रैविध्यं मूर्छनास्वपि ।
समादिष्टं तु सुस्पष्टं रागोत्पादनहेतवे ॥ ५५ ॥
समानस्वरमेलेऽपि केवलं मूर्छनाभिदा ।
रागभेदसमुत्पत्तिः संभवेदिति प्रस्फुटम् ॥ ५६ ॥
लक्ष्येऽधुना तु सर्वत्र रागमेलनिरूपणम् ।
मृदुतीव्रादिसंज्ञाभिः क्रियत इत्यसंशयम् ॥ ५७ ॥

मूर्छनं तु स्वरस्यैव गमकादिकसंज्ञितम् ।
स्वीकृतं लक्ष्यसंमत्या श्रोतुचित्तानुरंजकम् ॥ ५८ ॥

सप्तस्वरसमूहात्मा नित्यं मेल इतीरितः ।
षाडवौडुवसंपूर्णभिद्द्वारा रागहेतुकः ॥ ५९ ॥

मेलप्रस्तारः ।

सरिगमपधनीति संगीते मेल ईरितः ।
पर्यायो मूर्छनायाः स्यात् सत्कृतो लक्ष्यवर्त्मनि ॥ ६० ॥
सरिगमस्वरोपेते मेले पूर्वांगमीप्सितम् ।
पधनिसस्वरैश्चाथ संभवत्युत्तरांगकम् ॥ ६१ ॥
पूर्वांगे कोमलौ ज्ञेयौ स्वरौ रिगौ तथैव च ।
उत्तरांगे निधौ ज्ञेयौ रागाचपजसंज्ञितौ ॥ ६२ ॥
पूर्वांगेत्वचलौ शिष्टौ स्वरौ तौ षड्जमध्यमौ ।
पसौ तथोत्तरांगे तौ निश्चलौ लक्षितौ पुनः ॥ ६३ ॥
रिगधानिस्वराणां हि विकृतिभिः समीरिताः ।
प्रस्तारक्रियया लक्ष्ये मुख्यता रागमेलकाः ॥ ६४ ॥
मेलज्ञानं विना मेलजन्यं ज्ञातुं न शक्यते ।
अतो मेलप्रबोधार्थं तत्स्वरूपं निरूप्यते ॥ ६५ ॥

प्रस्तारप्रक्रिया संगीतसारामृते ।

" षड्ज आद्यस्तदुपरि चत्वारः क्रमशः स्वराः ।
ऋषभाख्यानकाश्चापि गांधाराख्यानकाश्च ते ॥ ६६ ॥
आद्यस्तत्र न गांधारश्चतुर्थो रिषभो न हि ।
ऋषभावपि गांधारौ द्वितीयकतृतीयकौ ॥ ६७ ॥
प्रथमादित्रयं तत्र भवेदृषभसंज्ञकम् ।
द्वितीयादित्रयं चात्र गांधारसंज्ञितं भवेत् ॥ ६८ ॥ "

" षड्जस्वरस्य पुरतश्चत्वारः स्युः स्वरा यथा ।
पंचमस्यापि पुरतश्चत्वारः स्युः स्वरास्तथा ॥ ६९ ॥
धैवताख्याः निषादाख्याः प्रथमाद्यास्तु धैवताः ।
द्वितीयाद्या निषादा स्युर्मुरार्यादिषु तु त्रिषु ॥ ७० ॥
रागेष्वथ धनी शुद्धौ द्वितीयौ तु धनीरितौ ।
पंचश्रुतिर्धैवतश्च कैशिक्याख्यनिषादकः ॥ ७१ ॥
तृतीयौ षट्श्रुतिर्धश्च काकल्याख्यनिषादकः ।
त्रिष्वेतषु युगलेष्वन्यतरद्‌गृह्यमीरितम् ॥ ७२ ॥
स्वरेषु द्वादशस्वेषु तत्तद्रागोपयोगतः ।
तत्तत्स्वरसमूहात्मा मेल इत्येवमीरितः ॥ ७३ ॥ "

तथाहि ।

षड्ज आद्यस्तदुपरि चत्वारः क्रमशः स्वराः ।
ऋषभाख्यानकाश्चापि गांधाराख्यानकाश्च ते ॥ ७४ ॥
आद्यस्तत्र न गांधारश्चतुर्थो रिषभो न हि ।
ऋषभावपि गांधारौ द्वितीयकतृतीयकौ ॥ ७५ ॥
प्रथमादित्रयं ह्यत्र भवेदृषभसंज्ञकम् ।
द्वितीयादित्रयं चात्र भवेद्गांधारसंज्ञितम् ॥ ७६ ॥
ऋषभादित्रयं चाथ रारीरुसंज्ञितं यदि ।
गागीगुसंज्ञित भूयाद्गांधारादित्रयं ध्रुवम् ॥ ७७ ॥
स्वरेष्वेषु चतुर्ष्वेव षट्संज्ञाः कृत्रिमा मताः ।
प्रस्तारस्य सुसिध्यर्थमिति स्यात्तद्विदां स्फुटम् ॥ ७८ ॥
एवं च पंचमाग्रेऽपि निवसत्सु स्वरेषु तत् ।
धाधीधुनानिनुसंज्ञं संज्ञाषट्कं भवेत् स्फुटम् ॥ ७९ ॥

उपर्युक्तेऽथ पूर्वांगे प्रस्तारक्रियया ततः ।
अर्धमेलास्तु षट्संख्या रागोपयोगिनः स्फुटाः ॥ ८० ॥
सरागामा सरागीमा सरागुमा सरीगिमा ।
सरीगुमा सरुगुमा भवेयुस्ते यथाक्रमम् ॥ ८१ ॥
उत्तरांगे पुनस्त्वेवमर्धमेला भवन्ति ते ।
पधानासा पधानीसा पधानुसादिका ध्रुवम् ॥ ८२ ॥
उत्तरांगस्थषट्कस्य योजनात्प्रथमे दले ।
षट्त्रिंशन्मेलसंप्राप्तिर्भवेत् सद्यो न संशयः ॥ ८३ ॥
मासंज्ञमध्यमस्थाने मिसंज्ञो यदि मध्यमः ।
प्रयुज्येत तदा चान्यत्षट्त्रिंशन्मेलसंभवः ॥ ८४ ॥
एवं द्वासप्ततिः प्रोक्ता लक्ष्यलक्षणकोविदैः ।
सर्वे रागाश्रयीभूता मेलाः शार्ङ्गिकगोचराः ॥ ८५ ॥

चतुर्दण्डिप्रकाशिकायाम् ।

" येनोपायेन मेलास्ते द्विसप्ततिरिति स्फुटाः ।
तमुपायं प्रवक्ष्यामि लक्ष्यज्ञसुखबुद्धये ॥ ८६ ॥
रगारगीरगू चैव रिगी-रिगुरुगू तथा ।
षड्भेदा इतिपूर्वांगे द्रष्टव्या गीतकोविदैः ॥ ८७ ॥
धनाधनीधनू चैव धिनी धिनुधुनू तथा ।
उत्तरांगेऽपि षड्भेदा द्रष्टव्या गीतकोविदैः ॥ ८८ ॥
पूर्वांगगतषड्भेदाः षड्जाद्याः स्युः पृथक्पृथक् ।
उत्तरांगस्थषड्भेदाः पंचमाद्याः पृथक्पृथक् ॥ ८९ ॥
आद्यः पूर्वांगगो भेद उत्तरांगस्थितैः क्रमात् ।
योज्यते यदि षड्भेदैः षण्मेलाः संभवन्त्यतः ॥ ९० ॥
पूर्वांगस्य द्वितीयोऽपि भेदोऽनेनैव वर्त्मना ।
संयोज्यते यदि तदा षण्मेलाः संभवन्त्यतः ॥ ९१ ॥

एवं तृतीयो भेदोऽपि षण्मेलोत्पादको भवेत् ।
चतुर्थोऽपि तथैव स्यात्पंचमोऽप्येवमेव हि ॥ ९२ ॥
एवं षष्ठोऽपि विज्ञेयः षण्मेलोत्पत्तिकारणम् ।
अतः पूर्वांगमेलानां षण्णामपि पृथक्पृथक् ॥ ९३ ॥
उत्तरांगस्थितैः षड्भिर्भेदैः संयोजने कृते ।
षड्षण्मेलप्रकारेण मेलाः षट्त्रिंशदागताः ॥ ९४ ॥
एतेष्वेव तु षट्त्रिंशन्मेलेषु प्रतिमेलकम् ।
मासंज्ञमध्यमस्थाने मिसंज्ञो यदि मध्यमः ॥ ९५ ॥
निवेश्यते तदा तेषां भवेदुत्तरमेलता ।
इत्यस्माभिः समुन्नीता जाता मेला द्विसप्ततिः ॥ ९६ ॥
ननु त्यक्त्वा मासंज्ञं तु केवलं मध्यमं पुनः ।
मिसंज्ञितस्य तत्स्थाने मध्यमस्य निवेशनात् ॥ ९७ ॥
त एव पूर्वमेलाः किं भवन्त्युत्तरमेलकाः ।
इति चोक्ते सदृष्टांतं परिहारं प्रचक्ष्महे ॥ ९८ ॥
कटाहसंभृतं क्षीरं केवलं दधिबिंदुना ।
यथा संयोज्यमानं तु दधिभावं प्रपद्यते ॥ ९९ ॥
तथैव पूर्वमेलास्ते मध्यमेन मिसंज्ञिकाः ।
केवलेनापि संयुक्ता भजन्त्युत्तरमेलताम् ॥ ४०० ॥

× × ×

अथ विज्ञाय तत्वेन मेलान् द्व्यधिकसप्ततिम् ।
तेषां प्रयोगसमये रगारगांतिमत्कृतः ॥ १ ॥
संकेतो नैव संग्राह्यः किन्तु पूर्वप्रसिद्धया ।
व्यवहारः सरिगमपधनीत्येव संज्ञया ।
द्विसप्ततेश्च मेलानां कर्तव्य इति निर्णयः ॥ २ ॥ "

द्विसप्ततिमेलसमर्थने ग्रंथकार आह ।

" ननु द्विसप्ततिर्मेला भवता परिकल्पिताः ।
प्रसिद्धाः पुनरेतेषु मेलाः कतिचिदेव हि ॥ ३ ॥
दृश्यन्ते न तु सर्वेऽपि तेन तत्कल्पनं वृथा ।
कल्पनागौरवन्यायादिति चेदिदमुच्यते ॥ ४ ॥
अनन्ताः खलु भेदास्ते देशस्था अपि मानवाः ।
तेषु सांगीतिकैरुच्चावचसंगीतकोविदैः ॥ ५ ॥
ये कल्पयिष्यमाणाश्च कल्प्यमानाश्च कल्पिताः ।
अस्मदादिभिरज्ञाता ये च शास्त्रैकगोचराः ॥ ६ ॥
ये च देशीयरागास्तद्रागसामान्यमेलकाः ।
ये तु पंतुवराळ्याख्यकल्याणिप्रमुखा अपि ॥ ७ ॥
नानादेशीयरागास्तद्रागसामान्यमेलकाः ।
संग्रहीतुं समुन्नीता एते मेला द्विसप्ततिः ॥ ८ ॥
ततश्चैतेषु वैयर्थ्यशंका किंकारणं भवेत् ॥ ९ ॥
न हि संघटते वृत्तरत्नाकरनिरूपिते ।
तत्र प्रस्तारलब्धानां वृत्तानां निकुरुंबके ॥ १० ॥
अस्मदादिप्रसिद्धस्य वृत्तवैयर्थ्यशंसनम् ।
न हि संघटते तालप्रस्तारजनिते पुनः ॥ ११ ॥
तालजाले प्रसिद्धस्य तालवैयर्थ्यशंसनम् ।
यदि कश्चिन्नदुर्नीत ( तो ? ) मेलेभ्यस्तद्विसप्ततेः ॥ १२ ॥
न्यूनं वाप्यधिकं वापि प्रसिद्धैर्द्वादशस्वरैः ।
कल्पयेन्मेलनं तर्हि ममायासो वृथा भवेत् ॥
न हि तत्कल्पने भाललोचनोऽपि प्रगल्भते ॥ १३ ॥ "

## वीणादंडे प्रस्तारक्रियानिदर्शनं ।

| लक्ष्यगतस्वराः । | | ग्रंथोक्तस्वराः । | कृत्रिमसंज्ञाः |
|---|---|---|---|
| शुद्धषड्जः | | शुद्धषड्जः | |
| कोमलरिः | १ | शुद्धऋषभः ... ... | ( रा ) |
| शुद्धरिः | २ | शुद्धगः; पंचश्रुतिरिः; ... | ( री ) ( गा ) |
| कोमलगः | ३ | साधारण गः; षट्श्रुतिरिः; ... | (रुः) ( गी ) |
| शुद्धगः | ४ | अंतरगः ... ... ... | ( गुः ) |
| शुद्धमः | | शुद्धमः | |
| तीव्रमः | | वराळीमः ... ... ... | ( मि ) |
| शुद्धपः | | शुद्धपंचमः | |
| कोमलधः | १ | शुद्धधः ... ... ... | ( धा ) |
| शुद्धधः | २ | शुद्धनिः; पंचश्रुतिधः; ... | ( धी ) ( ना ) |
| कोमलनिः | ३ | कैशिकनिः; षट्श्रुतिधः; | ( धुः ) ( नी ) |
| शुद्धनिः | ४ | काकलीनिः ... ... ... | ( नुः ) |
| शुद्धषड्जः | | शुद्धषड्जः | |

पद्धत्यां दाक्षिणात्यानां ये द्वादश स्वरा मताः ।
त एवात्र प्रतीताः स्युरिति लक्ष्यज्ञसंमतम् ॥ १४ ॥
रागोत्पादनतत्वं च सर्वसाधारणं यतः ।
द्विसप्ततिमेलकानां स्वीकारोऽत्र न गर्हितः ॥ १५ ॥
यद्यप्येतावती संख्या मेलानां शास्त्रसंमता ।
व्यवहारे न ते सर्वे प्रतीता इति संमतम् ॥ १६ ॥

रागोत्पादनप्रकरणम् ।

हिंदुस्थानीयपद्धत्यां द्वाद्शैव स्वरा मताः ।
उद्गमस्थानभूतास्ते रागाणामिति संमतम् ॥ १७ ॥
शुद्धाः सप्त तथा पंच विकृता उक्तलक्षणाः ।
योग्यमेलव्यवस्थित्या भवेयू रागहेतवः ॥ १८ ॥
सूक्ष्मस्वरप्रयोगाणां विधानं श्रूयते क्वचित् ।
ग्रंथोक्तनियमाभावात्तच्चर्चा वादमूलका ॥ १९ ॥
एकस्मिन्नेव रागे स्याद्भिन्नश्रुतिप्रयोजनम् ।
स्वरसंगत्यधीनं तदिति लक्ष्यविदो विदुः ॥ २० ॥
भिन्नश्रुतिसमायोगे परिणामो भवेत् पृथक् ।
विज्ञानं तु तथाप्येतच्छ्रोतृगणेऽतिदुर्लभम् ॥ २१ ॥
सर्वमेतत्समालोच्य लक्ष्यमार्गानुसारिणा ।
द्वादशैव स्वरा अत्र मया मेलेषु निश्चिताः ॥ २२ ॥

तथाहि रागतत्वविबोधे ।

" श्रुतयो द्वादशैवात्र स्वरस्थानतयोदिताः ।
तथोक्तवारिताः सर्वाऽस्वरस्थानतयादिशेत् ॥ २३ ॥
न श्रुतिस्थस्वरोत्पन्नप्रस्तारप्राप्तमेलजान् ।
युक्तोद्ग्राहयुजो रागान् कल्पयंतु मनीषिणः ॥ २४ ॥"
मेलाः स्युर्मूर्छनाधारा रागास्तु मूर्छनाश्रिताः ।
अतो वक्ष्ये प्रकारांस्तान्मूर्छनाया नवोदितान् ॥ २५ ॥

मेलानुसारतो लक्ष्ये त्रैविध्यं मूर्छनागतम् ।
स्पष्टं मया पुरेवोक्तं पुनरुक्तिर्निरर्थिका ॥ २६ ॥
पर्यायो मूर्छनायाः स्याल्लक्ष्ये मेलः समादृतः ।
षाडवौडुवसंपूर्णमिद्वारा रागवाचकः ॥ २७ ॥

मेलगतमूर्छनाया नवभेदाः ।

आरोहे स्यात्सुसंपूर्णो विलोमेऽपि तथैव च ।
स भवेत्प्रथमो भेदो द्वितीयः कथ्यतेऽधुना ॥ २८ ॥
आरोहे स्यात्सुसंपूर्णो विलोमे षाडवः पुनः ।
तृतीयः पूर्ण आरोहे विलोमे चौडुवस्तथा ॥ २९ ॥
आरोहे षाडवः प्रोक्तः संपूर्णः स्याद्विलोमके ।
चतुर्थो वर्णितो भेदः पंचमः कथ्यतेऽधुना ॥ ३० ॥
आरोहे चौडुवो यस्तु संपूर्णश्च विलोमके ।
आरोहे षाडवो नित्यं विलोमेऽपि तथैवच ॥ ३१ ॥
षाडवषाडवः षष्ठः कीर्तितो लक्ष्यवेदिभिः ।
आरोहे षाडवख्यातो विलोमे चौडुवः पुनः ॥ ३२ ॥
सप्तमः संमतो भेदोऽष्टमोऽपि कथ्यतेऽधुना ।
औडुवारोहसंपन्नो विलोमे षाडवः पुनः ॥ ३३ ॥
औडुवो रोहणे नित्यमवरोहेऽपि चौडुवः ।
नवमः कथ्यते भेदो लक्ष्ये नित्यं सुखप्रदः ॥ ३४ ॥
द्विसप्ततिर्यतो मेलाः शास्त्रकारैः सुनिश्चिताः ।
प्रत्येकमेलनेऽवश्यं नवभेदा भवन्त्यमी ॥ ३५ ॥

शक्यरागसंख्यानिर्णयः ।

अथ कुर्वे प्रबोधार्थं जिज्ञासूनां निरूपणम् ।
मूर्छनोद्भूतरागाणां प्रस्फुटं शास्त्रसंमतम् ॥ ३६ ॥
शुद्धस्वरसमुद्भूता मूर्छना या प्रकीर्तिता ।
तत्र संभाव्यरागाणां कुर्मः संख्यानिदर्शनम् ॥ ३७ ॥

पूर्णारोहावरोहः स्यात् प्रकारस्त्वेक एव हि ।
संपूर्णषाडवास्तत्र षडेव संभवंति ते ॥ ३८ ॥
संपूर्णौडुवकाश्चाथ पंचदशमिता मताः ।
इति परिस्फुटं भूयादनायासेन तद्विदाम् ॥ ३९ ॥
षाडवारोहसंपन्ना विलोमे षाडवाः पुनः ।
षट्त्रिंशद्भेदकास्तत्र मन्यन्ते लक्ष्यकोविदैः ॥ ४० ॥
षाडवौडुवभेदास्ते नवतिः संप्रकीर्तिताः ।
पंचदशहताः षट् ते परिस्फुटं विवेकिनाम् ॥ ४१ ॥
औडुवारोहसंपन्नाः संपूर्णा अवरोहणे ।
पंचदश प्रकारास्ते संभवेयुर्मते विदाम् ॥ ४२ ॥
औडुवारोहसंयुक्ता विलोमे षाडवास्तथा ।
नवतिप्रमिता भेदा सर्वलक्ष्यज्ञसंमताः ॥ ४३ ॥
औडुवौडुवभेदास्ते शरनेत्रकराः स्मृताः ।
एकैकस्यां मूर्छनायां प्रकाराः संभवन्त्यमी ॥ ४४ ॥
द्विसप्ततिमेलकेषु न्यायेनैतेन लक्षिताः ।
वसुवेदवसुवेदरामा भेदा भवन्ति ते ॥ ४५ ॥
त्रैविध्यान्मेलनस्यात्र यतो रागसमुद्भवः ।
उपर्युक्तप्रकारास्ते रागत्वं यान्त्यसंशयम् ॥ ४६ ॥
हिंदुस्थानीयपद्धत्यां मार्गा स्युरपरा अपि ।
लक्ष्यविद्भिः समादिष्टा रागोत्पादनहेतवे ॥ ४७ ॥
आरोहे संप्रयुक्तास्ते स्वराः न स्युर्विलोमके ।
अथवा तद्विपर्यासो जनयेद्रागभेदकम् ॥ ४८ ॥
रागोचितस्वरेषु स्याद्विशिष्टा वक्रता क्वचित् ।
समानस्वरपंक्तौ वा वादिभेदाद्भवेद्भिदा ॥ ४९ ॥
न रागाणां न तालानामन्तः कुत्रापि विद्यते ।
इति यच्छ्रूयते लोके केवलं सत्यमेव तत् ॥ ५० ॥

यद्यप्यसंख्यरागास्ते वर्णिताः शास्त्रगोचराः ।
प्रतीता लक्ष्यके त्वत्र रागाः कतिचिदेव हि ॥ ५१ ॥

## मूर्छनाजन्यरागभेदनिरूपणम् ।

संपूर्णसंपूर्णः १ प्रकारः

| आरोहः | अवरोहः |
|---|---|
| १ स रि ग म प ध नि | नि ध प म ग रि स |

संपूर्णषाडवाः—६ प्रकाराः

| | आरोहः | अवरोहः |
|---|---|---|
| १ | स रि ग म प ध नि | ० ध प म ग रि स |
| २ | —— ,, —— | नि ० प म ग रि स |
| ३ | —— ,, —— | नि ध ० म ग रि स |
| ४ | —— ,, —— | नि ध प ० ग रि स |
| ५ | —— ,, —— | नि ध प म ० रि स |
| ६ | —— ,, —— | नि ध प म ग ० स |

संपूर्णौडुवाः—१५ प्रकाराः

| | आरोहः | अवरोहः |
|---|---|---|
| १ | स रि ग म प ध नि | ० ० प म ग रि स |
| २ | —— ,, —— | ० ध ० म ग रि स |
| ३ | —— ,, —— | ० ध प ० ग रि स |
| ४ | —— ,, —— | ० ध प म ० रि स |
| ५ | —— ,, —— | ० ध प म ग ० स |
| ६ | —— ,, —— | नि ० ० म ग रि स |
| ७ | —— ,, —— | नि ० प ० ग रि स |
| ८ | —— ,, —— | नि ० प म ० रि स |
| ९ | —— ,, —— | नि ० प म ग ० स |
| १० | —— ,, —— | नि ध ० ० ग रि स |
| ११ | —— ,, —— | नि ध ० म ० रि स |
| १२ | —— ,, —— | नि ध ० म ग ० स |
| १३ | —— ,, —— | नि ध प ० ० रि स |
| १४ | —— ,, —— | नि ध प ० ग ० स |
| १५ | —— ,, —— | नि ध प म ० ० स |

## षाडवसंपूर्णाः—६ प्रकाराः ।

| आरोहः | | | | | | | | अवरोहः |
|---|---|---|---|---|---|---|---|---|
| १ | स | री | ग | म | प | ध | ० | नि ध प म ग री स |
| २ | स | री | ग | म | प | ० | नि | ——— ,, ——— |
| ३ | स | री | ग | म | ० | ध | नि | ——— ,, ——— |
| ४ | स | री | ग | ० | प | ध | नि | ——— ,, ——— |
| ५ | स | री | ० | म | प | ध | नि | ——— ,, ——— |
| ६ | स | ० | ग | म | प | ध | नि | ——— ,, ——— |

### औडुवसंपूर्णाः—१५ प्रकाराः

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | सा | री | ग | म | प | ० | ० | नि ध प म ग री स |
| २ | सा | री | ग | म | ० | ध | ० | नि ध प म ग री सा |
| ३ | सा | री | ग | ० | प | ध | ० | नि ध प म ग री सा |
| ४ | सा | री | ० | म | प | ध | ० | ——— ,, ——— |
| ५ | सा | ० | ग | म | प | ध | ० | ——— ,, ——— |
| ६ | सा | री | ग | म | ० | ० | नि | ——— ,, ——— |
| ७ | सा | री | ग | ० | प | ० | नि | ——— ,, ——— |
| ८ | सा | री | ० | म | प | ० | नि | ——— ,, ——— |
| ९ | सा | ० | ग | म | प | ० | नि | ——— ,, ——— |
| १० | सा | री | ग | ० | ० | ध | नि | ——— ,, ——— |
| ११ | सा | री | ० | म | ० | ध | नि | ——— ,, ——— |
| १२ | सा | ० | ग | म | ० | ध | नि | ——— ,, ——— |
| १३ | सा | री | ० | ० | प | ध | नि | ——— ,, ——— |
| १४ | सा | ० | ग | ० | प | ध | नि | ——— ,, ——— |
| १५ | सा | ० | ० | म | प | ध | नि | ——— ,, ——— |

षाडवषाडवाः षट्त्रिंशत् प्रकारा
षाडवौडुवा नवतिप्रकाराः ।
औडुवषाडवा नवतिप्रकाराः ।
औडुवौडुवाः पञ्चविंशत्यधिकशतद्वयम्

महत्यो रागसंख्यास्ता ग्रंथकारैः समीरिताः ।
लक्ष्ये प्रसिद्धिवैधुर्यादनेकाः स्युरुपेक्षिताः ॥ ५२ ॥
आधुनिकास्तु निष्णाता गायका लक्ष्यवर्त्मनि ।
गायन्तस्तत्र श्रूयन्ते क्वचिद्रागशतद्वयम् ॥ ५३ ॥
रंजनाद्रागता प्रोक्तो नियमो लक्ष्यवेदिभिः ।
रागसंख्याप्यवश्यं स्यात्तेन मर्यादिता स्फुटम् ॥ ५४ ॥

अनूपसंगीतविलासे ।

ग्रंथेऽनूपविलासाख्ये भावभट्टेन धीमता ।
रागो नवविधः प्रोक्तो मूर्छनाभेदसाम्यतः ॥ ५५ ॥
तथाहि ।
" रागस्तु नवधा प्रोक्तः पूर्णः स्यात् सप्तभिः स्वरैः ।
षड्भिः षाडवसंज्ञः स्यादौडुवः पंचभिर्भवेत् ॥ ५६ ॥
यथार्थनामकाः षट्स्युर्भेदा भावप्रभाषिताः ।
पूर्णौडुवकसंज्ञस्तु पूर्णषाडवसंज्ञकः ॥ ५७ ॥
तथौडुवकपूर्णः स्यात् षाडवाद्यस्तु पूर्णकः ।
षाडवौडुवकश्चापि तथौडुवकषाडवः ।
प्रोक्तो नवविधो रागः श्रीजनार्दनसूनुना ॥ ५८ ॥ "

टिप्पनी ।

मूर्छनानामतो मन्ये रहस्यं तत्पुरोदितम् ।
प्रापितं मेलकेष्वत्र येन केनापिवर्त्मना ॥ ५९ ॥

तानप्रकरणम् ।

येन विस्तार्यते रागः स तानः कथ्यते बुधैः ।
शुद्धकूटविभेदेन द्विविधास्ते समीरिताः ॥ ६० ॥
शुद्धतानरहस्यं तल्लक्ष्ये नेह परिस्फुटम् ।
अतो विवेचनं तेषां नैवात्र सार्थकं भवेत् ॥ ६१ ॥

केचिद्वदंति तानेभ्य एतेभ्यो लक्ष्यवर्त्मनि ।
प्रसिद्धं रागत्रैविध्यं साधितं गानकोविदैः ॥ ६२ ॥

चतुर्दंडिप्रकाशिकायाम् ।

" तानो द्विधा शुद्धतानः कूटतान इति क्रमात् ।
एकैकरागमात्राभिव्यक्तिसंपादकस्तु यः ॥ ६३ ॥
स शुद्धतान इत्युक्तः कूटतानः स उच्यते ।
यस्तु रागद्वयस्फूर्तिः साधारणतया स्थितः ॥ ६४ ॥ "
ग्रंथकारास्तु प्राचीना लक्ष्यगामि रहस्यकम् ।
तानानां नैव कुत्रापि विवृण्वन्तीति प्रस्फुटम् ॥ ६५ ॥

कूटतानाः । रत्नाकरे ।

" असंपूर्णाश्च संपूर्णा व्युत्क्रमोच्चारितस्वराः ।
मूर्छनाः कूटतानाः स्युस्तत्संख्यामभिदध्महे ॥ ६६ ॥
पूर्णाः पंचसहस्राणि चत्वारिंशद्युतानि तु ।
एकैकस्यां मूर्छनायां कूटतानाः सह क्रमैः ॥ ६७ ॥
स्युः षाडवानां विंशत्या सह सप्त शतानि तु ।
औडुवानां तु विंशत्या सहितं शतमिष्यते ॥ ६८ ॥
चतुःस्वराणां कूटानां चतुर्विंशतिरीरिताः ।
त्रिस्वराः षड् द्विस्वरौ द्वावेकस्त्वेकस्वरो मतः ॥ ६९ ॥ "
नियमोऽयं यथायोग्यं कल्पनीयो विचक्षणैः ।
उपर्युक्ते तु प्रस्तारे मूर्छनायाः सविस्तरम् ॥ ७० ॥
" अंकानेकादिसप्तान्तानूर्ध्वमूर्ध्वं लिखेत्क्रमात् ।
हते पूर्वेण पूर्वेण तेषु चांके परे परे ।
एकस्वरादिसंख्या स्यात् क्रमेण प्रतिमूर्छनम् ॥ ७१ ॥ "

प्रस्तारनियमः रत्नाकरे ।

" क्रमं न्यस्य स्वरः स्थाप्यः पूर्वः पूर्वः परादधः ।

स चेदुपरि तत्पूर्वः पुरस्तूपरिवर्तिनः ।
मूलक्रमक्रमात्पृष्ठे शेषाः प्रस्तार ईदृशः ॥ ७२ ॥"

खंडमेरुः दर्पणे ।

" नष्टोद्दिष्टप्रबोधार्थं खंडमेरुरथोच्यते ।
सप्तकोष्ठां लिखेदाद्यां पंक्तिमेकैककोष्ठतः ॥ ७३ ॥
हीनं तु पूर्वपूर्वं स्यात्पंक्तिषट्कमधो लिखेत् ।
आद्यपंक्त्यादिकोष्ठे तु लिखेदेकं परेषु खम् ॥ ७४ ॥
द्वितीयपंक्तावप्येकमाद्यकोष्ठे लिखेद्बुधः ।
परेषु पूर्वपूर्वांकं कोष्ठसंख्यागुणं न्यसेत् ॥ ७५ ॥
एवमेव लिखेदंकमधोऽधः पंक्तिकोष्ठके ।
खंडमेरुरयं प्रोक्तो नष्टोद्दिष्टप्रबोधकः ॥ ७६ ॥

तदुपयोगः ।

वेद्यतानस्वरमितान् दत्वा तेष्वेव लोष्टकान् ।
मूलक्रमं लिखित्वादावुद्दिष्टं तदधो लिखेत् ॥ ७७ ॥
स्वरान्मूलक्रमस्यांत्यात्पूर्वं यावतिथः स्वरः ।
उद्दिष्टांत्यस्तावतिथे कोष्ठेऽधो लोष्टकं क्षिपेत् ॥ ७८ ॥
लोष्टचालनमंत्यात्स्यात् त्यक्त्वा लब्धं क्रमो भवेत् ।
समश्चेदंतिमोऽन्त्येन सोऽपि त्याज्यः प्रयत्नतः ॥ ७९ ॥
लोष्टकांत्यांकसंयोगादुद्दिष्टस्य मितिर्भवेत् ।
संख्यया तु यदा रूपे पृष्टे नष्टं तदुच्यते ॥ ८० ॥
यैरंकैर्नष्टसंख्या स्यान्मौलिकांकसमन्वितैः ।
नष्टतानस्वरस्थानं तैर्ज्ञात्वा तं स्वरं लिखेत् ॥ ८१ ॥"

वर्णालंकाराः ।

" गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः।
स्थाय्यारोह्यवरोही च संचारीत्यथलक्षणम् ॥ ८२ ॥

स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः ।
स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ ॥
एतत्संमिश्रणाद्वर्णः संचारी परिकीर्तितः ॥ ८३ ॥ ”

कल्लिनाथटीकायाम्:—गानक्रियाया वर्णत्वं स्वरपदादेर्वर्णनात् विस्तारकरणात् । एकस्यैवेति तत्रादौ “सासासा रीरीरी” एवमादिप्रयोगः । द्वितीये “सारीमामा” इत्येवमादिरूपः । परावन्वर्थनामकौ । परावारोह्यवरोहिणावन्वर्थनामकौ । स रि ग म प ध नि इत्यारोहादारोही । नि ध प म ग रि सेत्यवरोहादवरोहीत्येवम् । एतत्संमिश्रणात् । एतेषां स्थाय्यादीनां त्रयाणां वर्णानां “सारीसारीगा सानिधसारीगे” त्येवं यथायोगं मिश्रणात्संचारीवर्णः परिकीर्तितः। यत्र गानक्रियायां यस्य वर्णस्य बाहुल्यं दृश्यते तत्र तेन व्यपदेशः कर्तव्य इति मन्तव्यम् ।

अलंकाराः ।

“ विशिष्टवर्णसंदर्भमलंकारं प्रचक्षते ।
तस्य भेदा बहुविधा ग्रंथकारैरुदीरिताः ॥ ८४ ॥ ”

रत्नाकरे ।

कल्लिनाथटीकायाम्:—वर्णसंदर्भोऽलंकार इत्येतावत्युक्ते संचारिणि व्यभिचारः स्यात्स मा भूदिति विशिष्टमिति विशेषणम् । वैशिष्टयं च नियतकलादियुक्तत्वम् ।

क्रमेणस्वरसंदर्भमलंकारं प्रचक्षते ।
तस्य भेदास्तु भूयांसस्तत्र स्थायिगतान् ब्रुवे ॥ ८५ ॥

पारिजाते ।

शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव ।
अविभूषितेव कांता गीतिरलंकारहीना स्यात् ॥ ८६ ॥

भरतनाट्यशास्त्रे ।

अलमेते ह्यलंकारा रंजनलब्ध्यै स्वरावबोधाय ।
वर्णांगव्यासाय च तदवश्यं पूर्वमभ्यस्याः ॥ ८७ ॥

रागविबोधे ।

ध्रुवो मठ्यो रूपकश्च झंपात्रिपुट एव च ।
अठताल एकतालः सप्ततालाः प्रकीर्तिताः ॥ ८८ ॥
एतत्तालाश्रिताश्चैव ह्यलंकारास्तु सप्त ते ।
अहोबलेन संप्रोक्ताः पारिजाते स्वनिर्मिते ॥ ८९ ॥
इंद्रनीलो महावज्रो निर्दोषः सीरकोकिलौ ।
आवर्तकः सदानंदस्तेषां संज्ञाः समीरिताः ॥ ९० ॥
अन्येऽपि स्युरलंकारा लक्ष्यमार्गोपयोगिनः ।
नव्यशिक्षार्थिवर्गस्य तान् प्रवक्ष्यामि नामतः ॥ ९१ ॥
भद्रो नंदो गात्रवर्णौ बिंदुरभ्युच्चयस्तथा ।
आक्षिप्तः प्रेंखितः श्येनास्त्रिवर्णौ जवचारिवौ ॥ ९२ ॥
शंखाक्षेपौ मता एते त्रयोदश सुलक्षणाः ।
संमत्याहोबलस्यैव संगृहीता मयात्र ते ॥ ९३ ॥
लक्षणानि प्रसिद्धानि पारिजाते यतस्ततः ।
उद्धृतानि न तान्यत्र विस्तरातिभिया मया ॥ ९४ ॥
अलंकारान्विना रागा विस्तरं नाप्नुवन्ति हि ।
एतैः पुनः प्रगातॄणां स्वरतालप्रवीणता ॥ ९५ ॥

रागः ।

योऽयं ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रंजको जनचित्तानां स रागः कथ्यते बुधैः ॥ ९६ ॥

रागजातयः ।

औडुवः पंचभिः प्रोक्तः स्वरैः षड्भिश्च षाडवः ।
संपूर्णः सप्तभिर्ज्ञेय एवं रागस्त्रिधा मतः ॥ ९७ ॥

हृदयप्रकाशे ।

" द्वौ त्रयो वापि चत्वारः स्युस्ताना रंजकस्वराः ।
पंचाद्यैरथ रागः स त्रिधा पंचभिरौडुवः ॥ ९८ ॥
षड्भिः स्वरैः षाडवः स्यात्संपूर्णः सप्तभिः स्वरैः ॥ "
पंचोनेभ्यः स्वरेभ्यश्च न स्याद्रागस्यसंभवः ॥ ९९ ॥

प्राचीनग्रंथोक्तरागलक्षणानि ।

" रंजयन्ति मनांसीति रागास्ते दशलक्षणाः ।
भवन्ति ते मतंगाद्यैः प्रापितान्यानि च क्रमात् ॥ ५०० ॥
लक्षणानि दशोक्तानि लक्ष्यन्ते तावदादितः ।
ग्रहांशौ मंद्रतारौ च न्यासापन्यासकौ तथा ॥ १ ॥
अथ संन्यासविन्यासौ बहुत्वं चाल्पता तथा ।
लक्षणानि दशैतानि रागाणां मुनयोऽब्रुवन् ॥ २ ॥
दशानामपि चैतेषां क्रमाल्लक्षणमुच्यते ।
येनादौ गीयते गीतं स्वरेण स भवेद्ग्रहः ॥ ३ ॥
बहुशो गीयते येन स्वरेणांशः स कथ्यते ।
अंशस्वरस्त्वसावेव जीवस्वर इति स्मृतः ॥ ४ ॥
नीचैः स्वरेण यद्गानं स मंद्रस्वर उच्यते ।
उच्चस्वरेण यद्गानं स तारस्वर उच्यते ॥ ५ ॥
न्यासस्वरः स कथितो येन गीतं समाप्यते ।
अवान्तरसमाप्तिं यो गीतस्यापि तनोति सः ॥ ६ ॥
अपन्यासः स स्मृतोऽन्यस्त्वात्यंतिकसमाप्तिकृत् ।
इतिभेदो भवेन्न्यासापन्यासस्वरयोर्द्वयोः ॥ ७ ॥
संन्यासो नाम गीताद्यखंडस्यैवसमाप्तिकृत् ।
गीतखंडाद्यावयवस्यान्ते तिष्ठति स स्वरः ॥ ८ ॥

विन्यास एतौ संन्यासविन्यासौ भरतादिभिः ।
अन्तर्भूतावपन्यासस्वर एवेति कीर्तितम् ॥ ९ ॥
अलंघनं तदभ्यासो बहुत्वं द्विविधं मतम् ।
स्वरस्यास्पर्शनं यत्तल्लंघनं परिकीर्तितम् ॥ १० ॥
साकल्येन स्वरस्पर्शस्त्वलंघनमिति स्मृतम् ।
यदेकस्य स्वरस्यैव नैरन्तर्येण वाथवा ॥ ११ ॥
व्यवधानेन स्याद्भूयो भूयोऽप्युच्चारणं हि तत् ।
अभ्यास इति शंसन्ति बहुत्वं द्विविधं ततः ॥ १२ ॥
अल्पत्वं च द्विधा प्रोक्तमनभ्यासाच्च लंघनात् ।
पूर्वोक्ताभ्यासराहित्यमनभ्यासः प्रकीर्तितः ॥
पूर्वोक्तालंघनाभावो लंघनं परिकीर्तितम् ॥ १३ ॥ "

वादिसंवादिस्वरप्रकरणम् ।

रत्नाकरे ।

चतुर्विधाः स्वरा वादी संवादी च विवाद्यपि ।
अनुवादी च वादी तु प्रयोगे बहुलस्वरः ॥ १४ ॥
श्रुतयो द्वादशाष्टौ वा ययोरंतरगोचराः ।
मिथः संवादिनौ तौ स्तो निगावन्यविवादिनौ ॥ १५ ॥
रिधयोरेव वा स्यातां तौ तयोर्वा रिधावपि ।
शेषाणामनुवादित्वं वादी राजाऽत्र गीयते ॥ १६ ॥
संवादी त्वनुसारित्वादस्यामात्योऽभिधीयते ।
विवादी विपरीतत्वाद्धीरैरुक्तो रिपूपमः ॥ १७ ॥
नृपामात्यानुसारित्वादनुवादी तु भृत्यवत् ॥ १८ ॥

संगीतपारिजाते ।

संगीतशास्त्रवेत्तारः प्रवदन्ति मुनीश्वराः ।
प्रयोगो बहुधा यस्य वादिनं तं स्वरं जगुः ॥ १९ ॥

मिथः संवादिनौ तौ स्तः सपौ स्यातां पसौ तथा ।
न वादी न च संवादी न विवाद्यपि यः स्वरः ॥ २० ॥
सोऽनुवादीति विज्ञेयः सूक्ष्मदृष्ट्या विचक्षणैः ।
रक्तिविच्छेदहेतुत्वं यस्मिन् रागे तु यस्य तत् ।
तद्रागस्थस्वरैस्तस्य विवादित्वं भवेद्ध्रुवम् ॥ २१ ॥

संगीतसमयसारे ।

सप्तस्वराणां मध्येऽपि स्वरे यस्मिन्सुरागता ।
स जीवस्वर इत्युक्तो ह्यंशो वादीति कथ्यते ॥ २२ ॥
जीवस्वरस्य सदृशः संवादिस्वर उच्यते ।
विवादी स्याद्विसदृशः सोऽनुवादी त्रयात्मकः ॥ २३ ॥
अनुवादिनि संवादिनि जीवस्वरके सदा कलाविद्भिः ।
बहुतमबहुतरबहवः कार्या रागा विलोमेन ॥ २४ ॥
सुप्रयोगे विवादी सः स्वल्पः कार्योऽथवा पुनः ।
प्रच्छादनीयो लोप्यो वा मनाक्स्पर्शः स्वरस्य यः ।
प्रच्छादनं तदेवाहुर्लोपः स्वरस्य विकृतिः ॥ २५ ॥

चतुर्दंडिप्रकाशिकायाम् ।

" वादी संवाद्यपि तथा विवादी चानुवाद्यथ ।
प्रयोगे बहुधावृत्तः स्वरो वादीति कथ्यते ॥ २६ ॥
श्रुतयो द्वादशाष्टौ वा ययोरंतरगोचराः ।
मिथः संवादिनौ तौ चेत्येवं संवादिलक्षणम् ॥ २७ ॥
समौ सपौ रिधौ चैव निगौ संवादिनौ मिथः ।
एवं शुद्धस्वरेपूक्तः संवादिस्वरनिर्णयः ॥ २८ ॥
साधारणाख्यगांधारकैशिक्याख्यनिपादयोः ।
तथैवान्तरकाकल्योः संवादो विकृतेष्वपि ॥ २९ ॥

शुद्धर्षभेण संवादी वराळीमध्यमस्तथा ।
शुद्धश्च मध्यमः शुद्धनिषादश्चेत्युभौ स्वरौ ॥ ३० ॥

श्रुत्यष्टकेनान्तरितावपि संवादिनौ न हि ।
एवं संवादिलक्ष्मोक्तं विवादी लक्ष्यतेऽधुना ॥ ३१ ॥

*एकश्रुत्यंतरितता ययोस्तु स्वरयोर्द्वयोः ।*
तयोर्मिथो विवादित्वमेवं सर्वत्र कल्पयेत् ॥ ३२ ॥

रिगौ धनी च शुद्धेषु स्वरौ स्यातां विवादिनौ ।
साधारणान्तरौ चैव कैशिकी काकली स्वरौ ॥ ३३ ॥

मिथो विवादिनौ ज्ञेयौ विकृतेषु स्वरेष्वपि ।
विवादिवादिसंवादिभिन्नाः स्युरनुवादिनः ॥ ३४ ॥

चतुर्विधस्वरेष्वेषु वादी राजा प्रकीर्त्यते ।
संवादी त्वनुसारित्वादस्यामात्यो विधीयते ॥ ३५ ॥

विवादी विपरीतत्वाद्धीरैरुक्तो रिपूपमः ।
स्वरूपमर्दनं तेन प्रयोगे स्याद्विवादिना ॥ ३६ ॥

स्वरूपमर्दनाभावे गीते रक्तिर्न लभ्यते ।
शत्रूपमर्दने हि स्याद्राज्ञां लोके प्रकाशनम् ॥ ३७ ॥

नृपामात्यानुसारित्वादनुवादी तु भृत्यवत् ।
वादिविवादिसंवाद्यनुवादिस्वरमण्डलम् ॥ ३८ ॥ ”

सांप्रतं लक्ष्ये ।

गीतं प्रारभ्यते येन स स्वरो ग्रह ईरितः ।
गीतसमाप्तिकृन्न्यासो वर्ण्यते चांशकोऽधुना ॥ ३९ ॥

बहुशो गीयते येन स्वरेणांशः स कथ्यते ।
अंशस्वरस्त्वसावेव जीवस्वर इति स्मृतः ॥ ४० ॥

लक्षणानां दशोक्तानां नूनं स्याद्गौरवं पुरा ।
देश्यामिह पुनस्तेषां दृश्यते परिलोपनम् ॥ ४१ ॥

मध्यकालीनग्रंथेषु ग्रहांशन्याससंयुतम् ।
यद्रागलक्षणं ख्यातं न तदद्यात्र लक्ष्यते ॥ ४२ ॥

अधुना लक्ष्यमार्गे तु मेलजात्यादिसाधनैः ।
तथा वादिस्वरेणैव सर्वे रागाः सुवर्णिताः ॥ ४३ ॥

प्रत्येकस्मिंस्तु रागेऽत्र वादीह्यतिमहत्ववान् ।
निर्णायको रागनाम्नः समयस्य प्रसूचकः ॥ ४४ ॥

विदग्धा गायका गीते प्रायो विवादिनं स्वरम् ।
ईषत्स्पर्शप्रयोगेण दर्शयन्ति सपाटवम् ॥ ४५ ॥

विवादिनं स्वरं प्रायो योजयन्त्यवरोहणे ।
न तच्छास्त्रेऽतिदोषार्हमित्यूचुर्लक्ष्यवेदिनः ॥ ४६ ॥

सुप्रमाणयुतो मन्ये विवाद्यपि सुरक्तिदः ।
यथेषत्कृष्णवर्णेन शुभ्रस्यातिविचित्रता ॥ ४७ ॥

अर्वाचीनहिंदुस्थानीयरागाणां समयदृष्ट्या व्यवस्थितिः ।

---

प्रातःकाले तथा सायंकाले गेयास्तु ये मताः ।
संधिप्रकाशनामानो रागा अस्माभिरीरिताः ॥ ४८ ॥

एतद्रागेषु निर्दिष्टं वैचित्र्यं लक्ष्यवेदिभिः ।
मृदुत्वं रिधयोश्चाथ तीव्रत्वं गनिषादयोः ॥ ४९ ॥

सायंकालप्रगेयत्वं तीव्रमेण भवेत्स्फुटम् ।
शुद्धमेन भवेत्तद्वत् प्रातःकालप्रसूचनम् ॥ ५० ॥

हिंदुस्थानीयरागाणां त्रयो वर्गाः सुनिश्चिताः ।
स्वरविकृत्यधीनास्ते लक्ष्यलक्षणकोविदैः ॥ ५१ ॥

रिगधतीव्रका रागा वर्गेऽस्मिन् व्यवस्थिताः ।
द्वितीये कीर्तिताः सर्वे रिधकोमलसंयुताः ॥ ५२ ॥

तृतीये तु नियुक्ताः स्युर्गनिकोमलमंडिताः ।
समयादिव्यवस्थाऽत्र भवेन्मेनाध्वदर्शिना ॥ ५३ ॥

त्रिष्वेतेषु सुवर्गेषु संगीतं लक्ष्यपूर्वकम् ।
समावेशयितुं शक्यमिति मर्मज्ञसंमतम् ॥ ५४ ॥



# द्वितीयाध्यायः ।

अथ श्रीलक्ष्यसंगीतद्वितीयाध्याय ईर्यते ।
चतुराख्येन भरतपूर्वखंडनिवासिना ॥ १ ॥

रागजनकदशमेलसंकेतः ।

द्विसप्ततिमेलकेषु त्यक्त्वाताननवश्यकान् ।
स्वीकुर्मो दशसंख्यांस्तान् लक्ष्यवर्त्मनि विश्रुतान् ॥ २ ॥
प्रचरद्रूपसंगीतमशेषं स्यात् परिस्फुटम् ।
तन्मेलेषु समाविष्टमिति मर्मविदां मतम् ॥ ३ ॥
जन्यजनकमेलाख्यकल्पनं नैव गर्हितम् ।
प्राक्प्रसिद्धं हि तत्वं तदिति सर्वत्र संमतम् ॥ ४ ॥
पर्यायो मेलशब्दस्य भाषायां थाट ईरितः ।
केषुचिच्छास्त्रग्रंथेषु संस्थितिः परिकीर्तिता ॥ ५ ॥
ग्रंथेऽत्र मेलकानां यद्दशानामेव योजनम् ।
केवलं तदकान्यत्र लक्ष्यसीकर्यहेतवे ॥ ६ ॥
शक्या नेतुं मेलसंख्या तत्रैपद्ग्यूनतामसौ ।
तद्भूनत्वं त्ववश्यं स्यात्काठिन्याधिक्यकारणम् ॥ ७ ॥
सरिगमपधाख्येषु शुद्धस्वरेषु केवलम् ।
प्रत्येकं षड्जभावेन कल्पितेषु यथाक्रमम् ॥ ८ ॥
धेलावली तथा काफी भैरवी चेमनाह्वयः ।
समाजांसावरीत्येते षण्मेलाः सिद्धिमाप्नुयुः ॥ ९ ॥
शुद्धविकृतभिद्वारा चैतेषु स्यात्सपाटवम् ।
समावेशयितुं शक्यमस्मत्संगीतमुत्तमम् ॥ १० ॥

कदाचिदेवमेवास्मच्छास्त्रकारैः पुरातनैः ।
पुंरागाः षट् समुन्नीता येन केनापि वर्त्मना ॥ ११ ॥
सादृश्यमप्यसादृश्यमन्यरागगतं ततः ।
सुविमृश्य कृता तैश्च भार्यापुत्रादियोजना ॥ १२ ॥
व्यवस्थेयं समीचीना किंत्वाद्यावेकवाक्यता ।
रागरूपगताभीष्टा यतः प्रीतिः सतां भवेत् ॥ १३ ॥
प्राचीनैर्ग्रंथकारैस्तैर्मुख्यरागाः षडीरिताः ।
दशमेलान्वयं ब्रूमो नात्र दोषोऽस्ति कश्च न ॥ १४ ॥
मेलसंख्याः प्रभिन्नाः स्युस्तत्तद्ग्रंथैः प्रकल्पिताः ।
सारासारविचारज्ञैरेतज्ज्ञेयं यथोचितम् ॥ १५ ॥

रागजनकदशमेलनामानि ।

कल्याणीमेलकस्त्वाद्यो वेलावली द्वितीयकः ।
खमाजाख्यस्तृतीयः स्याद्भैरवाख्यश्चतुर्थकः ॥ १६ ॥
पंचमः पूर्विकासंज्ञः षष्ठः स्यान्मारवाभिधः ।
सप्तमः काफिसंज्ञः स्यादासावरी तथाष्टमः ॥ १७ ॥
नवमो भैरवीमेलो दशमस्तोडिकाह्वयः ।
इत्येते दशमेलास्ते रागोत्पादनहेतवः ॥ १८ ॥

तेषां लक्षणानि ।

अथो वक्ष्ये क्रमान्मेलान् दशसंख्यान् सलक्षणम् ।
लक्ष्यसंगीतपद्धत्या जीवभूतांश्च तत्त्वतः ॥ १९ ॥
शुद्धस्वरसमुद्भूतो वेलावलीतिनामकः ।
दाक्षिणात्यमते चासौ शंकराभरणाभिधः ॥ २० ॥
तस्मिंस्तीव्राभिधो मश्चेत्प्रविष्टो लक्ष्यवर्त्मनि ।
शेषशुद्धस्वरैस्तत्र कल्याणीमेल उद्भवेत् ॥ २१ ॥

खमाजमेलने प्रोक्ताः शुद्धाः सरिगमाः पधौ ।
शुद्धौ निः कोमलाख्यः स्यादिति लक्ष्यज्ञसंमतम् ॥ २२ ॥
भैरवस्य सुमेले स्युः शुद्धाः सगमपास्तथा ।
निषादोऽपि भवेच्छुद्धो रिधौ कोमलसंज्ञितौ ॥ २३ ॥
रिधौ तु कोमलौ यत्र गनी तीव्रौ च तीव्रमः ।
स्यात्पूर्वीनामको मेलो मारवा कथ्यतेऽधुना ॥ २४ ॥
उपर्युक्ते तु मेले चेद्धैवतः शुद्धसंज्ञितः ।
मारवामेलकः सिद्धः परमेलप्रवेशकः ॥ २५ ॥
निगौ तु कोमलौ यत्र परे शुद्धाभिधाः स्वराः ।
लक्ष्ये काफीतिसंज्ञः स्यान्मेलको लोकविश्रुतः ॥ २६ ॥
कोमला निधगा यत्र शेषास्ते शुद्धसंज्ञिताः ।
यस्मिन्नासावरीमेलः कीर्तितो गायनोत्तमैः ॥ २७ ॥
भैरवीनामके मेले मृदुरिगधनिस्वराः ।
मन्योस्तत्रैव तीव्रत्वे तोडीमेलः समुद्भवेत् ॥ २८ ॥
इत्येते दश संप्रोक्ता लक्ष्यलक्षणसंगताः ।
सविस्तरं मया मेला रागोत्पादनहेतवः ॥ २९ ॥

दशमेलानां दाक्षिणात्यनामानि ।

मेलसंज्ञा अथो वक्ष्ये दक्षिणोत्तरभेदतः ।
जिज्ञासूनां भवेद्येन सौकर्यमविशंकितम् ॥ ३० ॥
कल्याणीमेलकोऽस्माकं तत्रापि स्यात्तथैव च ।
बेलावल्या भवेत्तत्र शंकराभरणाभिधः ॥ ३१ ॥
खमाजमेलकोऽस्माकं तत्र कांभोजिनामकः ।
लक्ष्येऽत्र भैरवाख्यातस्तत्र मालवगौडकः ॥ ३२ ॥
मेलः पूर्वीतिसंज्ञोऽत्र तत्र स्यात्कामवर्धनी ।
मारवामेलकोऽस्माकं तत्र स्याद्गमनश्रमः ॥ ३३ ॥

लक्ष्ये काफीतिसंज्ञोऽसौ तत्र खरहरप्रिया ।
आसावर्याह्वयोऽस्माकं तत्र स्यान्नटभैरवी ॥ ३४ ॥

प्रसिद्धो भैरवीमेलस्तत्र तोडीतिसंज्ञितः ।
अस्माकं तोडिमेलस्तु तत्र पंतुवराळिका ॥ ३५ ॥

जन्यरागनामानि ।

कल्याणमेले ।

इमनः शुद्धकल्याणो भूपाली चंद्रकांतकः ।
जयत्कल्याणरागश्च कल्याणः पूरियाद्यकः ॥ ३६ ॥

हिंदोलश्चैव मालश्रीः केदारो हंमिराह्वयः ।
कामोदश्छायनाटश्च श्यामकल्याणनामकः ॥
गौडसारंग इत्येते रागाः कल्याणमेलजाः ॥ ३७ ॥

वेलावलीमेले ।

वेलावली तथाल्हैया शुक्लवेलावली ततः ।
देवगिरीमनी दुर्गा सर्पर्दा ककुभा तथा ॥ ३८ ॥
नटवेलावलीत्युक्ता लच्छाशाखोऽथ शंकरः ।
देशिकारो बिहागश्च हेमकल्याणनामकः ॥ ३९ ॥
मलुहा नटमांडी च गुणकली पहाडिका ।
रागा एते मतास्तज्ज्ञैर्वेलावलीसुमेलजाः ॥ ४० ॥

खंमाजमेले ।

खंमाजश्चाथ झिंझूटी सोरटी देसनामकः ।
खंबावती तिलंगाख्या दुर्गा रागेश्वरी ततः ॥ ४१ ॥
जयावंती तथा गारा कामोदस्तिलकाद्यकः ।
इत्येते कीर्तिता लक्ष्ये रागाः खंमाजमेलजाः ॥ ४२ ॥

भैरवमेले ।

भैरवश्च कलिंगश्च रंजनी मेघपूर्विका ।
सौराष्ट्री जोगिया गौरी रामकली प्रभातकः ॥ ४३ ॥
विभासश्चाथ बंगालो भैरवः शिवपूर्वकः ।
आनंदभैरवोऽप्यत्र भैरवोऽहीरसंज्ञकः ॥ ४४ ॥
ललितपंचमाख्यश्च गुणक्रीर्लक्ष्यविश्रुता ।
इत्येते भैरवान्मेलाज्जाता रागा विदां मते ॥ ४५ ॥

पूर्वीमेले ।

पूर्वी गौरी तथा रेवा श्रीरागो दीपकस्तथा ।
त्रिवेणी मालवी टंकी जेताश्रीश्च वसंतकः ॥ ४६ ॥
धनाश्रीः पुरियाद्यासौ परजा विबुधप्रिया ।
एते रागा मतास्तज्ज्ञैः पूर्वीमेलसमुत्थिताः ॥ ४७ ॥

मारवामेले ।

मारवा पूरिया चैव ललिता सोहनी तथा ।
बरारीजैत्रमंसारा विभासो भट्टियारकः ॥ ४८ ॥
साजगिरी तथा मालीगौरा पंचमसंज्ञितः ।
ललितागौरिकाऽप्येते मारवामेलजा मताः ॥ ४९ ॥

काफीमेले ।

धनाश्रीः सैंधवी काफी धानी भीमपलाशिका ।
प्रदीपकी तथा पीलू रागिणी हंसकंकणी ॥ ५० ॥
वागीश्वरी बहारश्च सुहा सुघाइका ततः ।
देशाख्यः कौशिकश्चाथ सहाना नायकी तथा ॥ ५१ ॥
सारंगो मध्यमाद्याख्यः शुद्धसारंग इत्यपि ।
वृंदावन्यथ सामंतो मीयांसारंगनामकः ॥ ५२ ॥

बडहंसस्तथा शुद्धमल्लारः पटमंजरी ।
गौंडमल्लारनामासौ सूरमल्लार इत्यपि ॥ ५३ ॥
रामदास्याख्यमल्लारो मीयांमल्लार एव च ।
ततः स्यान्मेघमल्लार इत्येते काफिमेलजाः ॥ ५४ ॥

आसावरीमेले ।

आसावरी तथा जौनपुरी गांधारिदेशिके ।
खटरागस्तथा सिंधुभैरवी कौशिकाह्वयः ॥ ५५ ॥
दर्बारिकानडाऽडाणो झीलफो यवनप्रियः ।
रागा एते मतास्तज्ज्ञैरासावरीसुमेलने ॥ ५६ ॥

भैरवीमेले ।

भैरवी मालकोशश्च तोडीबिलासखानिका ।
रागा एते मतास्तज्ज्ञैर्भैरवीमेलनोत्थिताः ॥ ५७ ॥

तोडीमेले ।

तोडी गुर्जरिका मूलतानी लक्ष्ये सुविश्रुता ।
रागा एते प्रसिद्धाः स्युस्तोडीमेलसमाश्रयाः ॥ ५८ ॥

---

कल्याणमेलजन्यरागाः ।

इमनः ।

कल्याणमेलसंजात इमनो लोकविश्रुतः ।
गनिसंवादसंपन्न आद्ययामोचितो निशि ॥ १ ॥
केचित्तंनिर्दिशन्त्येनं पारसीकप्रदेशजम् ।
अन्येऽस्मद्देशजं प्राहुर्बुधैः कार्योऽत्र निर्णयः ॥ २ ॥
पद्धत्यां दाक्षिणात्यानां नूनं स्यात् परिकीर्तितः ।
कल्याणो यमुनासंज्ञो रात्रिगेयो निवर्जितः ॥ ३ ॥

भाति मे त्विमनाख्योऽयं रागो यावनिकोद्धृतः ।
प्राविष्टो यवनैः प्रायः स्वकीये शासने पुरा ॥ ४ ॥
रागतरंगिणीग्रंथे तथैव हृत्प्रकाशके ।
रागोऽयं वर्णितः स्पष्टं कल्याणस्य स्वरैर्ध्रुवम् ॥ ५ ॥
ईषत्स्पर्शेन शुद्धाख्यमध्यमस्य विलोमके ।
कल्याणो यमनाद्योऽसौ जायते तद्विदां मते ॥ ६ ॥
आलापयोग्यता लक्ष्ये रागस्यास्य सुसंमता ।
पूर्णत्वसरलत्वाभ्यां गानं नित्यं निरर्गलम् ॥ ७ ॥
द्रुतमध्यविलंबितलयैस्त्रिभिः परिष्कृतम् ।
नियतं गायनं चास्य सर्वेषां सुखमावहेत् ॥ ८ ॥
प्रकारा बहवो लक्ष्ये कल्याणस्य समीरिताः ।
व्यवहारप्रसिद्धा ये संगृहीता मयात्र ते ॥ ९ ॥
तथाहि । अनूपसंगीतरत्नाकरे ।
" शुद्धकल्याणरागश्च ततः कल्याणनाटकः ।
हंमीरपूर्वकः पूर्व्या भूपालीपूर्वकस्ततः ॥ १० ॥
जयश्रीपूर्वकल्याणः क्षेमकल्याणकः स्मृतः ।
कामोदादिककल्याणो हेमकल्याणकस्ततः ॥
ऐमनादिककल्याणश्चाहेर्यादिस्ततः परम् ॥
ततास्तिलककामोदः कल्याणास्ते त्रयोदश ॥ ११ ॥ "

हृदयकौतुके ।

" इमनस्वरसंस्थाने शुद्धकल्याण ईरितः ।
पूरिया विदिता लोके जयत्कल्याण एव च ॥ १२ ॥ "

टिप्पनी ।

कल्याणमेलजा रागा विभज्यंते त्रिधा पुनः ।
अमैकमद्विमेत्येवं सौकर्यार्थं विचक्षणैः ॥ १३ ॥

वर्गेऽग्रिमे समादिष्टा रागा मध्यमवर्जिताः ।
द्वितीये कीर्तिता ये चैकमध्यमसुमंडिताः ॥ १४ ॥
तृतीये निहिताः सर्वे द्विमध्यमसमन्विताः ।
व्यवस्थेयं समीचीना लक्ष्यमार्गानुसारतः ॥ १५ ॥
द्विमध्यमेषु रागेषु प्रतिलोमगतः क्वचित् ।
कोमलस्य निषादस्यापीषत्स्पर्शः समीक्षितः ॥ १६ ॥
न तद्दोषास्पदं लक्ष्ये मन्यते गानकोविदैः ।
सुप्रमाणयुतो गीते विवादी रक्तिवर्धकः ॥ १७ ॥
संधिप्रकाशरागाणां रिधयोर्मृदुता ततः ।
कल्याणमेलमारभ्य तीव्रत्वे परिवर्तिता ॥ १८ ॥
परिवर्तनमप्येतद्भवेद्रक्तिप्रदायकम् ।
भिन्नरससमास्वादान्मनो हर्षं प्रपद्यते ॥ १९ ॥
पूर्वरागास्तथोत्तररागा लक्ष्ये समंततः ।
प्रत्येकस्माच्च मेलाच्च संभवेयुरिति स्फुटम् ॥ २० ॥
रागा उत्तरपूर्वास्ते भवेयुः प्रतिमूर्तयः ।
स्वस्वपूर्वाद्यरागाणामिति मर्मज्ञसंमतम् ॥ २१ ॥
मध्याह्नतः समारभ्यामध्यरात्रं पुनस्तु ये ।
रागा गीताः मताः सर्वे पूर्वरागा विचक्षणैः ॥ २२ ॥
एतत्क्रमविपर्यासे ये स्युर्गीताः समंततः ।
त उत्तराख्यरागाः स्युरिति लक्ष्यविदां मतम् ॥ २३ ॥
प्राधान्यं तत्र पूर्वांगे पूर्वरात्रे समीरितम् ।
ततः परं तु तद्भाति चलतीव क्रमात् पुरः ॥ २४ ॥
मध्यरात्रे निगौ स्यातां कोमलौ भूरिरक्तिदौ ।
अवगतं रहस्यं तत् सर्वैर्गानविशारदैः ॥ २५ ॥

मृदुत्वं रिधयोश्चाथ तीव्रत्वं निगयोरपि।
संधिप्रकाशकोक्तस्य चोपःकालस्य सूचकम् ॥ २६ ॥
तीव्रमस्य स्थितिस्तत्र रात्रिशेषप्रसूचिका ।
अपनयस्तु तस्यैव दिनोदयमुदीरयेत् ॥ २७ ॥
प्रतिमेलमथो रागाः केचित्तज्ज्ञैर्व्यवस्थिताः ।
द्विरूपिस्वरसंयुक्ताः परमेलप्रवेशकाः ॥ २८ ॥
समीक्षितं तु नो लक्ष्ये तन्त्रांशत्वं निषादके ।
संवादित्वं भवेत्तस्य नियतं दृष्टिगोचरम् ॥ २९ ॥

शुद्धकल्याणः ।

कल्याणमेलनोत्पन्नः शुद्धकल्याण ईरितः ।
प्रारोहे मनिहीनोऽसौ गांधारांशेन शोभितः ॥ ३० ॥
मते केपांचिदप्यत्र वादित्वमृषभे भवेत् ।
मंद्रमध्यस्वरैर्गीतो रात्र्यां प्रथमयामके ॥ ३१ ॥
गवादित्वे त्ववश्यं स्याद्धैवतो मंत्रिसंनिभः ।
सत्यंशे ऋषभे नूनं संवादी पंचमो भवेत् ॥ ३२ ॥
न्यंशो गेयः सदा पूर्वं यमनादिति संमतम् ।
गांधारांशस्ततपरं स्यान्नियमो हि मनीषिणाम् ॥ ३३ ॥
भेदोऽस्य संमतो लक्ष्ये भूपाल्याः परिकीर्तितः।
गांशिका मनिहीनासावेतस्मिंस्तद्विरुध्यते ॥ ३४ ॥
यद्यप्यत्र निमौ तज्ज्ञैरनुज्ञातौ विलोमके ।
घर्पणेनैव सुश्राव्यं तत्प्रदर्शनमीरितम् ॥ ३५ ॥
मनिहीनः शुद्धपूर्वकल्याणः समुदीरितः ।
हृत्प्रकाशाह्वये ग्रंथे हृदयेशेन धीमता ॥ ३६ ॥
आरोहे मनिहीनोऽसौ गांधारोद्ग्राहसंयुतः ।
अहोबलेन संदिष्टः पारिजाते परिस्फुटम् ॥ ३७॥

भूपाली ।

कल्याणमेलसंजाता भूपाली संमता जने ।
आरोहे चावरोहेऽपि मनित्यक्ता समै रिता ॥ ३८ ॥
गांधारोऽत्र मतो वादी धैवतोऽमात्यसंज्ञितः ।
गानं सुसंमतं तस्याः प्रथमप्रहरे निशि ॥ ३९ ॥
शुद्धकल्याणसादृश्यं नूनमस्यां सुलक्षितम् ।
तद्रागे न मनित्यागोऽवरोहे गीतविन्मते ॥ ४० ॥
प्राधान्यादत्र पूर्वांगे सायंगेयत्वमीक्षितम् ।
सत्युत्तरांगप्राधान्ये देशिकारो भवेत् स्वयम् ॥ ४१ ॥
देशिकारे धवादित्वं लोके सर्वत्र संमतम् ।
अतस्तद्रागतश्चास्या वैलक्षण्यं भवेत्स्फुटम् ॥ ४२ ॥
भूपाली कुत्रचित्प्रोक्ता प्रातर्गेयाऽथ गांशिका ।
रिगधकोमलाप्यन्या लक्ष्ये तन्नोपलभ्यते ॥ ४३ ॥
भूपालीसदृशो रागो दाक्षिणात्यमते भवेत् ।
मोहनपूर्वकल्याण इत्याहुर्गानकोविदाः ॥ ४४ ॥
गांधारोद्ग्राहसंपन्नो रागालापोऽत्र संमतः ।
स्वरस्थानैस्तु चतुर्भिः स्यान्नित्यमानंददायकः ॥ ४५ ॥

आलापलक्षण, रत्नाकरे ।

" ग्रहांशमंद्रताराणां न्यासापन्यासयोस्तथा ।
अल्पत्वस्य बहुत्वस्य षाडवौडुवयोरपि ॥
अभिव्यक्तिर्यत्र दृष्टा स रागालाप उच्यते ॥ ४६ ॥

टीकायाम्:—यत्र यस्मिन्स्वरसंनिवेशविशेषे ग्रहांशादीनामुक्तलक्षणानां स्वराणामल्पत्वादीनां तद्धर्माणां च अत्रैतेषामेवेत्यवधारणं कर्तव्यम् । तेनास्य धात्वंगबन्द्धेभ्यः प्रबंधेभ्यो वैलक्षण्यं

विवक्षितं भवति । तेषां ग्रहांशादीनामेवाभिव्यक्तिः स्वरूपप्रकाशनमाविर्भाव इत्यर्थः । न तु स्वरूपप्रकटीकरणमात्रम् । अनेन वक्ष्यमाणलक्षणायाऽऽज्ञप्तेरस्य भेदो दर्शितः । साऽभिव्यक्तिर्दृष्टा ज्ञाता भवति । तज्ज्ञैरिति शेषः । स स्वरसंनिवेशविशेषो रागालाप इत्युच्यते ।

रूपकं तद्वदेव स्यात् पृथग्भूतविदारिकम् ।

टीकायाम्:—रूपकं तद्वदेवाऽऽलापवदेव स्यात् । विशेषस्तु पृथग्भूता विच्छिद्य विच्छिद्य प्रयुक्तविदार्यो गीतखंडानि यस्मिन्निति तथोक्तम् । अयमर्थः । अपन्यासेष्वविरम्य एकाकारेण प्रवृत्त आलापः । स एवापन्यासेषु विरम्य विरम्य प्रवृत्तं रूपकम् ।

चंचत्पुटादितालेन मार्गत्रयविभूषिता ।
आक्षिप्तिका स्वरपदग्रथिता कथिता बुधैः ॥ ४७ ॥

टीकायाम्:—आक्षिप्तिका निबद्धगीतभेदः । सा च चंचत्पुटादितालेन । आदिशब्देन चाचपुटादयो मार्गताला गृह्यन्ते । तेष्वन्यतमेन । मार्गत्रयविभूषिता मार्गत्रये पूर्वोक्ते चित्रादौ विभूषिताऽलंकृता । जात्युक्तनियमेनेति द्रष्टव्यम् । स्वरपदग्रथिता षड्जादिस्वरभूषितैः पदैः पदार्थवाचकैः शब्दैर्ग्रथिता रचिता । पदतालाद्याक्षिप्तत्वादाक्षिप्तिकेत्यन्वर्था । बुधैर्मतंगादिभिः कथिता ।

रागालपनमालप्तिः प्रकटीकरणं मतम् ।
सा द्विधा गदिता रागरूपकाभ्यां विशेषणात् ॥ ४८ ॥

टीकायाम्—रागालपनमालप्तिरिति । अत्र यदालपनं साऽऽज्ञप्तिरित्यनेनाऽऽज्ञप्तिशब्दोऽप्यालपनशब्दवद्भावसाधनत्वेन व्युत्पन्न इति दर्शितं भवति । नन्वालापशब्दस्यापि साधनत्वाविशेषात् 'स्याद्रागालाप आलप्तिः' इति व्युत्पादनं कस्मान्न क्रियत इति चेत् । उच्यते । घञ्क्तिन्प्रत्यययोर्विलक्षणार्थत्वादिति । तथाहि ।

घञन्तस्तावदाविर्भावोऽर्थः । क्तिनन्तस्तु तिरोभावोऽर्थः । आविर्भाव-तिरोभावयोरत्यन्तवैलक्षण्यमेव स्फुटम् । तदुभयमध्यस्थस्थित्य-र्थत्वात्तदन्ते घञ्क्तिन्नन्तयोर्व्युत्पादनमविरुद्धम् । अत एव भावा-वस्थाभेदाद् घञाद्यन्तानां लिंगभेदोऽप्युपपन्न एव । ३० ।

रागविशेषणाद्रागालप्तिः । रूपकविशेषणाद्रूपकालप्तिरि-त्यर्थः ।

रागालप्तिस्तु सा या स्यादनपेक्ष्यैव रूपकम् ।
स्वस्थानैः सा चतुर्भिः स्यादिति गीतविदो विदुः ॥ ४९ ॥

सामान्यलक्षणमाह ।

वर्णालंकारसंपन्ना गमकस्थायचित्रिता ।
आलप्तिरुच्यते तज्ज्ञैर्भूरिभंगिमनोहरा ॥ ५० ॥

टीकायाम्—अत्र विशेषणसाम्यात्स्त्रीसमाधिर्ध्वन्यते । यथा वर्णालंकारादिसंपन्ना कामिनी कामुकदर्शने कदाचिदाविर्भूतं कुचकेशादिकं स्वांगं किंचिद्दर्शयत्येवं सविलासं तत्तिरोभावयति कदाचित्तिरोभूतं तदेव सव्याजं प्रकटीकरोति तथोक्तलक्षणाऽऽल-प्तिरपि स्वस्थानचतुष्टयैश्च तत्रतत्र रागं किंचिद्दर्शयन्ती तं तिरो-भावयति । कदाचित्तिरोभूतं तमेव प्रतिग्रहभंजनाभ्यां तत्रतत्र रागं प्रकटीकरोति । स एव प्रतिमाविषय एवार्थः । आलापस्तु पुमा-ञ्श्मश्र्वादिकमिव सदा रागमाविर्भावयति । नपुंसकमिवाऽऽलपनं तदुभयसाधारणस्थितिं दर्शयतीति सूक्ष्मेक्षिकयाऽवगन्तव्यम् ।

स्वस्थानचतुष्टयम् ।

यत्रोपवेश्यते रागः स्वरे स्थायी स कथ्यते ।
ततश्चतुर्थो द्व्यर्धः स्यात्स्वरे तस्मादधस्तने ॥ ५१ ॥
चालनं मुखचालः स्यात्स्वस्थानं प्रथमं च तत् ।
द्व्यर्धस्वरे चालयित्वा न्यसनं तद्द्वितीयकम् ॥ ५२ ॥

स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ।
द्व्यर्धद्विगुणयोर्मध्ये स्थिता अर्धस्थिताः स्वराः ॥ ५३ ॥

अर्धस्थिते चालयित्वा न्यसनं तु तृतीयकम् ।
द्विगुणे चालयित्वा तु स्थायिन्यासाच्चतुर्थकम् ॥
एभिश्चतुर्भिः स्वस्थानै रागालप्तिर्मता सताम् ॥ ५४ ॥

टीकायाम्:—द्विगुणे चालयित्वेति । द्विगुण इति तदुत्तरेषामप्युपलक्षणम् । तेषु चालयित्वा स्थायिन्यासाच्चतुर्थकं स्वस्थानं भवति ।

रागस्थापनाप्रकारमाह ।

स्तोकस्तोकैस्ततः स्थायैः प्रसन्नैर्बहुभङ्गिभिः ।
जीवस्वरव्याप्तिमुख्यै रागस्य स्थापना भवेत् ॥ ५५ ॥

टीकायाम् । जीवस्वरोंऽशस्वरः । उक्तस्वस्थानचतुष्टयप्रयुक्तायामालप्तावुक्तलक्षणैःस्वल्पै रागावयवैर्विस्तार्यमाणायामापाततोऽभिव्यक्तस्य रागस्य रागान्तरसाधारणस्थायाविप्रयोगात् स्वरूपतिरोभावे सति किंचित् प्रतीयमानता भवेत् । यथा लोके सभां प्रत्यागच्छतो देवदत्तस्य स्वरूपेणाभिव्यक्तस्य ततः सभां प्रविश्योपविष्टस्य तस्य स्वसदृशरूपवेषभाषादिसांकर्यात्स्वरूपतिरोभावे सति यथा तस्य किंचित्प्रतीयमानत्वम् । यथा वा पृथगानीय भिन्नवर्णेषु मणिषु प्रोतस्य मुक्तामणेर्मण्यन्तरच्छायोपरागात् स्वरूपतिरोभावे सति यथा तस्य किंचित् प्रतीयमानत्वं तद्वत् । इत्यभिप्रायः । "

जयत्कल्याणः ।

कल्याणमेलसंजातो जयत्कल्याण ईरितः ।
आरोहे चावरोहेऽपि मनिर्हीनोऽथ पांशकः ॥ ५६ ॥

संगतिर्गपयोश्चात्र भवेद्रक्तिप्रदायिनी ।
अवरोहे तथैवासौ धगयोर्बहुरक्तिदा ॥ ५७ ॥
ऋषभः कीर्तितस्तज्ज्ञै रागेऽत्र दुर्बलः सदा ।
गानं सुनिश्चितं तस्य रात्र्यां प्रथमयामके ॥ ५८ ॥
यतोऽयं पांशकः प्रोक्तो भूपालीमित् परिस्फुटा ।
वादिभेदे रागभेदो नियमोऽयं सुसंमतः ॥ ५९ ॥

पूरियाकल्याणः ।

कल्याणः पूरियाख्यातः कल्याणीमेलसंभवः ।
गांधारांशो मतो लक्ष्ये संपूर्णस्वरसंयुतः ॥ ६० ॥
ऋषभौ द्वौ प्रयुक्तावत्र रागे गानकोविदैः ।
आरोहे तीव्रसंज्ञः स्यात्कोमलः प्रतिलोमके ॥ ६१ ॥
संगतिर्गपयोश्चाथ भवेद्वैचित्र्यकारिणी ।
गानं सुसंमतं प्रोक्तं प्रथमप्रहरे निशि ॥ ६२ ॥
पद्धत्यां दाक्षिणात्यानां पूर्वकल्याणनामकः ।
अधुनाऽपि श्रुतो रागः गमनश्रममेलने ॥ ६३ ॥
यतस्तस्मिन्न निर्दिष्टे रिषभस्तीव्रसंज्ञकः ।
स्यात्पूरियाद्यकल्याणस्तद्भिन्न इत्यसंशयम् ॥ ६४ ॥

चंद्रकांतः ।

कल्याणमेलसंजातश्चंद्रकांतः श्रुतो जने ।
आरोहे मध्यमत्यक्तः प्रतिलोमे समग्रकः ॥ ६५ ॥
गांधारः संमतो वादी संवादी निस्वरो भवेत् ।
गानमस्य समीचीनं रात्र्यां प्रथमयामके ॥ ६६ ॥
प्राधान्यं निश्चितं चात्र पूर्वांगे गायनोत्तमैः ।
शुद्धकल्याणसादृश्य रागोऽयं संप्रदर्शयेत् ॥ ६७ ॥

कल्याणे शुद्धपूर्वाख्ये नारोहे तिष्ठतो मनी ।
मनिरिक्तस्तथा पांशो जयत्कल्याण ईरितः ॥ ६८ ॥
भूपाल्यां तु मनी नस्त आरोहे चावरोहणे ।
स्वातंत्र्यं चंद्रकांतस्य तस्माल्लक्ष्ये सुनिश्चितम् ॥ ६९ ॥

हिंदोलः ।

कल्याणमेलसंजातो हिंदोलो लोकविश्रुतः ।
प्रातःकालप्रगेयोऽसौ धांशको बहुसंमतः ॥ ७० ॥
गांशत्वं रात्रिगेयत्वं रागस्यास्य समर्थितम् ।
गायकैस्तु क्वचिल्लक्ष्ये बुधः कुर्याद्यथोचितम् ॥ ७१ ॥
वादित्वं नैव गांधारे भवेत् प्रातः सुसंगतम् ।
अतस्तद्धैवतस्यैव निश्चितं गानकोविदैः ॥ ७२ ॥
रिपयोरत्रलुप्तत्वादमात्यत्वं तु गस्वरे ।
प्रारोहे स्यान्निवक्रत्वं धमसंगत्यभीष्टदा ॥ ७३ ॥
लक्ष्ये क्रमात्सगासक्ता रिमच्छायावरोहणे ।
न तद्दोषास्पदं मन्ये यतस्तच्छास्त्रसंमतम् ॥ ७४ ॥
मालश्रीः पूरिया चैव वसंतोऽपि यथातथम् ।
संमिलन्ति स्वरूपेऽत्रेत्याहुः केचिद्विचक्षणाः ॥ ७५ ॥
वर्णयन्ति पुनः केचिदेनं भैरवमेलने ।
आसावरीमेलनेऽन्ये लक्ष्यमार्गविरोधि तत् ॥ ७६ ॥

मालश्रीः ।

कल्याणमेलसंजाता मालश्रीः कथ्यते बुधैः ।
आरोहे चावरोहेऽपि रिधहीना तथौडुवा ॥ ७७ ॥
पंचमोऽत्र भवेद्वादी संवादी षड्ज ईरितः ।
गानमस्याः समीचीनं सायंकाले मतं सताम् ॥ ७८ ॥

त्रिस्वरा सगपा केश्चिदुच्यते लक्ष्यवर्त्मनि ।
न तच्छास्त्रानुरूपं स्यात्स्वरूपं तद्विदां मते ॥ ७९ ॥
पंचोनेभ्यः स्वरेभ्यस्तु न स्याद्रागस्य संभवः ।
जानन्ति पंडिताः सर्वे रहस्यमिदमद्भुतम् ॥ ८० ॥
यद्यप्यत्र मनी देयौ स्वरसंख्याप्रपूरणे ।
दुर्बलौ तौ प्रयोगेषु ह्येतत्सर्वत्रसंमतम् ॥ ८१ ॥
संगत्या गपयोरेव भवेदेषा परिस्फुटा ।
तारषड्जान्मतो पातः पंचमे बहुरक्तिदः ॥ ८२ ॥
रागतरंगिणीग्रंथे मालश्रीः परिकीर्तिता ।
गौरीमेलसमुत्पन्ना रिधत्यक्ता तथौडुवा ॥ ८३ ॥
श्रीरागमेलसंजाता गनिकोमलमंडिता ।
ग्रंथे रागविबोधाख्ये सोमनाथेन भाषिता ॥ ८४ ॥

हंमीरः ।

कल्याणमेलके जातो हंमीरः प्रोच्यते बुधैः ।
गग्रहः धांशकः केश्चिद्धैवतांशोऽपि कथ्यते ॥ ८५ ॥
यद्यप्यत्र प्रयोगे स्याद्धैवते ह्यवधारणम् ।
न तत्स्यात् केवलं तस्य रागे वादित्वकारणम् ॥ ८६ ॥
तथापि देशिरूपेऽस्मिन् शास्त्रसंमत्यभावतः ।
लक्ष्यमार्गमनुल्लंघ्य बुधः कुर्यात् स्वनिर्णयम् ॥ ८७ ॥
मद्वंद्वं संमतं चात्र रोहण एव तीव्रमः ।
रात्रिगेयं तथा पूर्णं वक्रं रूपं मतं त्विदम् ॥ ८८ ॥
संघाताद्गमधानां स्यादेतद्रूपं परिस्फुटम् ।
प्रायोनैनैव कुर्वन्ति श्रोतारो नामनिर्णयम् ॥ ८९ ॥
द्विमध्यमेषु रागेषु नियमो लक्ष्यविश्रुतः ।
प्रारोहे स्यान्निदौर्बल्यमवरोहे गवक्रितम् ॥ ९० ॥

शुद्धकल्याणकेदाराविमनो मिश्रिता इह ।
इति संकीर्त्यते कैश्चिद्गानशास्त्रविशारदैः ॥ ९१ ॥

हृदयकौतुके ग्रंथे हंमीरः समुदीरितः ।
केदारमेलसंजातः शुद्धस्वरपरिष्कृतः ॥ ९२ ॥

ग्रंथे रागविबोधाख्ये मंजर्याख्ये तथैव च ।
मृदुधैवतसंयुक्तो रागोऽयं समुदीरितः ॥ ९३ ॥

केदारः ।

कल्याणमेलसंजातः केदारो बहुसंमतः ।
शंकराभरणेऽप्येनं केचिदाहुर्विचक्षणाः ॥ ९४ ॥
मद्वंद्वमिह संदिष्टं गौणत्वं तीव्रमे मतम् ।
अंशत्वं शुद्धमेऽभीष्टं मुक्तत्वं चापि तत्स्वरे ॥ ९५ ॥
प्रारोहे स्याद्रिगोनत्वमवरोहे गवर्जितम् ।
गानं सुरक्तिदं चास्य रात्र्यां प्रथमयामके ॥ ९६ ॥
पंगुत्वं यदि गांधारे निषादेऽपि तथैव तत् ।
साधारणो दृश्यतेऽयं नियमो लक्ष्यवर्त्मनि ॥ ९७ ॥
प्रयोगे मध्यमौ द्वौ तौ सुयुक्तावतिरक्तिदौ ।
नैतदन्येषु रागेषु बहुध्वालाक्षितं भृशम् ॥ ९८ ॥
धमार्दवं रिधाल्पत्वं सोमनाथादिका विदुः ।
यतो लक्ष्यविरोधि स्यात्तन्मतं नात्र सत्कृतम् ॥ ९९ ॥
शुद्धस्वरसमुत्पन्नः केदारः समुदीरितः ।
रागतरंगिणीग्रंथे लोचनेन विपश्चिता ॥ १०० ॥
पूर्वांगे रिगदौर्बल्यं यथोपरि निरूपितम् ।
तथैव चोत्तरांगे तन्निधयोः स्यात्सुनिश्चितम् ॥ १ ॥

कामोदः ।

कल्याणमेलसंभूतः कामोदो विबुधप्रियः ।
द्विमध्यमप्रयोगेण भवेल्लक्ष्ये द्विमेलजः ॥ २ ॥
पंचमोऽत्र भवेद्वादी रिस्वरोऽमात्यतुल्यकः ।
रात्र्यां प्रथमके यामे गानमस्य भवेत् प्रियम् ॥ ३ ॥
द्विमध्यमयुता रागा मताः कैश्चिद्द्विमेलजाः ।
यतः कल्याणभेदास्ते मेलेऽत्र समुदीरिताः ॥ ४ ॥
प्रयोगस्तीव्रमस्येह भवेदल्पोऽनुलोमके ।
रिपयोः संगतिश्चित्रा गवक्रत्वं विलोमके ॥ ५ ॥
प्रारोहे संमतायत्र निगौ स्वरौ सुदुर्बलौ ।
असत्मायो निषादश्चेदारोहे चावरोहणे ॥ ६ ॥
गौडहंमीरसंयोगाद्रूपमेतत्समुत्थितम् ।
लक्ष्यज्ञानां मतंत्वेतन्न मे भाति विसंगतम् ॥ ७ ॥
ग्रंथे रागविबोधाख्ये सोमनाथेन धीमता ।
कांबोदी रागिणी प्रोक्ता शुद्धस्वरपरिष्कृता ॥ ८ ॥
रागतरंगिणीग्रंथे तथा हृदयकौतुके ।
कामोदः कीर्तितो मेले कर्णाटस्य निकोमलः ॥ ९ ॥

छायानटः ।

कल्याणीमेलनोत्पन्नश्छायानाटः प्रकीर्तितः ।
रिपसंवादसंपन्नो गेयो रात्र्याद्ययामके ॥ १० ॥
अत्र सुसंगतिः प्रोक्ता पर्योः सर्वत्र संमता ।
पंचमादृषभे पातो नूनं स्याद्धृदयंगमः ॥ ११ ॥
प्रारोहे तीव्रमस्यात्र प्रयोगो दृश्यते क्वचित् ।
अवरोहे गवक्रत्वं सनियमं भवेत्पुनः ॥ १२ ॥

रागेऽस्मिन् गायकैः कैश्चिद्धैवतो ग्रह ईर्यते ।
षड्जस्वरगतो न्यासो मते तेषां सुरक्तिदः ॥ १३ ॥

अहोबलेन विदुषा छायानाटः प्रकीर्तितः ।
शुद्धस्वरसमुत्पन्नो द्विमध्यमसमन्वितः ॥ १४ ॥

कल्याणगौडहंमीरनटाल्हैया यथायथम् ।
मिलन्ति च्छायनाटेऽस्मिन्निति शंसन्ति केचन ॥ १५ ॥

द्विमध्यमेषु रागेषु द्वितीयेऽवयवे सदा ।
अन्तरानामके प्रायः किंचित्साहश्यमीक्षितम् ॥ १६ ॥

अतस्तद्वारणार्थं ते गानशास्त्रविशारदाः ।
रागगतविशिष्टांगं दर्शयन्ति मुहुर्मुहुः ॥ १७ ॥

श्यामकल्याणः ।

कल्याणीमेलसंजातः श्यामरागः समीरितः ।
कल्याणस्यैव भेदोऽयमिति सर्वत्र संमतम् ॥ १८ ॥

मद्वंद्वं धैवतोनत्वं प्रारोहेऽत्र विदां मतम् ।
वादित्वं निश्चितं षड्जे संवादित्वं तु मे स्वरे ॥ १९ ॥

वर्णयन्ति पुनः केचिद्रागमेनं रिवादिनम् ।
न तद्विसंगतं मन्ये लक्ष्यमार्गानुसारतः ॥ २० ॥

मुरचालेऽस्य रागस्य कामोदांगं भवेत्स्फुटम् ।
तद्रागस्थनिगाल्पत्वं नेहेति भित्परिस्फुटा ॥ २१ ॥

संगती रिमयो रम्या रागेऽत्र गुणिसंमता ।
कामोदे जीवभूताऽसौ संगती रिपयोः पुनः ॥ २२ ॥

संगत्या रिमयोर्नूनं छाया मल्लारिकोद्भवेत् ।
प्रस्फुटेन निषादेन गायकस्तां निवारयेत् ॥ २३ ॥

हंमीरगौडकेदारा मिलन्त्यस्मिन्स्वरूपके ।
संगिरन्ति पुनः केचिल्लक्ष्यलक्षणवेदिनः ॥ २४ ॥
रागतरंगिणीग्रंथे श्यामः केदारमेलजः ।
शुद्धस्वरसमुद्भूतो लोचनेन प्रकीर्तितः ॥ २५ ॥

गौडसारंगः ।

कल्याणीमेलके ज्ञेयो गौडसारंगनामकः ।
अतिवक्रस्वरूपोऽथ द्वाभ्यां माभ्यां सुभूषितः ॥ २६ ॥
मध्याह्नार्हो मतो न्यल्पो गवक्रोऽप्यवरोहणे ।
गांधारस्यैव वादित्वं लक्ष्ये स्यात्संमतं सताम् ॥ २७ ॥
तीव्रस्य मध्यमस्यात्र गौणत्वं लक्ष्यते स्फुटम्
अतो वेलावलीमेले रागोऽयं कीर्तितः क्वचित् ॥ २८ ॥
नटकेदारपूर्वीणां योगादयं समुद्भवेत् ।
इति सुनिश्चितं कैश्चिद्गानशास्त्रविशारदैः ॥ २९ ॥
ग्रंथेषु केषुचित्तत्र वीरशांतिरसाश्रितः ।
संपूर्णो वर्ण्यते गांशो गेयो मध्याह्नतः परम् ॥ ३० ॥
रागतरंगिणीग्रंथे गौडसारंग ईरितः ।
निद्भूयो धैवतत्यक्तो मेघसंस्थानकोत्थितः ॥ ३१ ॥

वेलावलीमेले ।

वेलावली

शंकराभरणे मेले वेलावलीतिनामकः ।
धैवतांशो मतो लक्ष्ये प्रातःकालोचितस्तथा ॥ १ ॥
प्रातःकालीयकल्याणमेनं शंसन्ति केचन ।
अवरोहे गवक्रत्वं कल्याणांगं निवारयेत् ॥ २ ॥

यदायं मध्यमत्यक्तो निवक्रोऽप्यधिरोहणे ।
वेलावलस्तदाल्हैयापूर्वकः संभवेद्ध्रुवम् ॥ ३ ॥
शुद्धवेलावलीरागे मृदुनिस्वरयोजनात् ।
अल्हैया संभवेल्लक्ष्य इतिसंगीतविन्मतम् ॥ ४ ॥
धमयोः संगतिश्चात्र भवेद्वैचित्र्यकारिणी ।
व्यवहारेऽल्हैयैव गीयते ह्यधिकांशतः ॥ ५ ॥
उत्तरांगप्रधानत्वाद्वैचित्र्यमुत्तरांगके ।
प्रायेणोत्तररागास्ते प्रभवंत्यवरोहणे ॥ ६ ॥
ग्रंथे रागविबोधाख्ये तथैव पारिजातके ।
रागोऽयं वर्णितो मेले शंकराभरणाह्वये ॥ ७ ॥
प्रकारा बहवः प्रोक्ता वेलावलस्य गायकैः ।
प्रसिद्धा लक्ष्यमार्गे ये संगृहीता मयाऽत्र ते ॥ ८ ॥

शुक्लवेलावली ।

शुद्धस्वरसमुद्भूता शुक्लवेलावली स्मृता ।
वेलावल्याः प्रभेदोऽयं प्रातःकालोचितो सनः ॥ ९ ॥
शुद्धमोऽत्र भवेद्वादी संवादी षड्जसंज्ञितः ।
प्रारोहे स्याद्रिदौर्बल्यं न्यासो मध्यम एव च ॥ १० ॥
रिपयोः संगतिश्चात्र प्रोक्ता रागांगवाचिका ।
निगयोर्धमयोश्चापि संगती रक्तिदायिके ॥ ११ ॥
उत्तरांगप्रधानत्वाद्वैचित्र्यं प्रतिलोमके ।
मुक्तत्वं शुद्धमस्यैव रागरूपं प्रदर्शयेत ॥ १२ ॥
कोमलस्य निषादस्य स्पर्शो धैवतसंयुतः ।
प्रतिलोमगतौ नैव गर्हणीयः सतां मते ॥ १३ ॥
वेलावल्यथ केदारो मिलतोऽत्र यथायथम् ।
इति संगीतविज्ञानां मतं सर्वत्र संमतम् ॥ १४ ॥

देवगिरी ।

वेलावलीसुमेलाच्च जाता देवगिरी ततः ।
वेलावलप्रकारोऽयं कल्याणांगेन मंडितः ॥ १५ ॥

षड्जस्तत्र मतो वादी कैश्चिद्धैवत ईरितः ।
प्रतिलोमे धगौ स्यातां दुर्बलौ लक्ष्यविन्मते ॥ १६ ॥

वेलावलीप्रभेदेषु नियमोऽतिमनोहरः ।
अवरोहक्रमेणैव रागांगं प्रकटीभवेत् ॥ १७ ॥

प्ररोहे रात्रिगेयास्ते यथा रागाः परिस्फुटाः ।
सुव्यक्तास्ते विलोमे स्युर्दिनगेयाः सतां मते ॥ १८ ॥

देवगिरी मता पूर्णा प्रातर्गेयापि लक्ष्यके ।
मंद्रमध्यस्वरैर्गीता नूनं स्याद्भूरिरक्तिदा ॥ १९ ॥

तीव्रमो नातिदीर्घोऽत्र दृश्यते कुत्रचिन्मतः ।
मते मे तत्प्रयोगेण यमनीरागसंभवः ॥ २० ॥

अवरोहगतो धेन सह कोमलनेर्लवः ।
वेलावलस्वरूपेऽत्र भवेद्व्यक्तिप्रदायकः ॥ २१ ॥

पूर्वांगस्य प्रधानत्वात्पूर्वरागविचित्रता ।
तथैवोत्तररागेषु वैचित्र्यमुत्तरांगके ॥ २२ ॥

कांबोदीमेलजा प्रोक्ता देवक्रीरपराह्णगा ।
विदुषा सोमनाथेन सांशन्यासग्रहा ह्यपा ॥ २३ ॥

अवरोहे धगत्यक्ता मतीव्रतरसंयुता ।
वर्णिता पारिजाताख्ये ग्रंथेऽहोबलसूरिणा ॥ २४ ॥

वेलावली तथाल्हैया विहागाख्यो गुणिप्रियः ।
मिलन्त्यत्र यथायोग्यमित्याहुर्लक्ष्यवेदिनः ॥ २४ ॥

इमनी ।

शुद्धमेलसमुद्भूता यमनी लक्ष्यविश्रुता ।
वेलावलीप्रकारोऽयं यमनांगपरिष्कृतः ॥ २६ ॥
इमनी गीयते नित्यं प्रातः पूर्णा द्विमान्विता ।
मिथः संवादिनावत्र सपाविति सुसंमतम् ॥ २७ ॥
प्रारोहे तीव्रमेणात्र यमनांगं समुद्भवेत् ।
शुद्धमस्य प्रयोगेण बुधस्तत्परिमार्जयेत् ॥ २८ ॥
पमपगमरिसैः स्याद्रागांगं सुपरिस्फुटम् ।
शेषं वेलावलस्यैव सर्वमत्र सुनिश्चितम् ॥ २९ ॥

सर्पर्दा ।

शुद्धमेलसमुत्पन्ना सर्पर्दा लोकविश्रुता ।
पारसीकेयरागोऽयं वेलावलांगमंडितः ॥ ३० ॥
पंचमः संमतो वादी संवादी षड्ज ईरितः ।
गानमस्याःसमीचीनं प्रथमप्रहरे दिने ॥ ३१ ॥
धगसंवादसंपन्नां केचिदेनां वदंति हि ।
लक्ष्यमार्गमनुलंघ्य बुधः कुर्यात् स्वनिर्णयम् ॥ ३२ ॥
वेलावलप्रकारेषु सर्वेष्वपि समंततः ।
धवादित्वं समादिष्टं कैश्चिल्लक्ष्यविशारदैः ॥ ३३ ॥
यद्यप्यत्र विहागस्य क्वचिद्रूपं समुद्भवेत् ।
वेलावल्यवरोहेण भवेद्भ्रांतिनिवारणम् ॥ ३४ ॥
अल्हैयेमनगौडाख्या मिलंत्यत्र यथायथम् ।
इति समर्थितं कैश्चिल्लक्ष्यलक्षणकोविदैः ॥ ३५ ॥
वेलावल्यथ झिंझूटी यदा स्यातां सुसंयुतौ ।
तदा सर्पर्दिकोत्पत्तिर्भवेद्वदन्ति के परे ॥ ३६ ॥

रागे कर्णाटगौडाख्ये वेलावलीसुमिश्रणात् ।
सर्पर्दायाः समुत्पत्तिः सोमनाथेन भाषिता ॥ ३७ ॥

ककुभा ।

स्याच्छुद्धस्वरसंमेलाद्रागः ककुभनामकः ।
वेलावलप्रभेदोऽयं प्रातर्गेयो मतो बुधैः ॥ ३८ ॥
मध्यमः संमतो वादी षड्जः स्यान्मंत्रितुल्यकः ।
वेलावल्यवरोहेण संपूर्णो रक्तिदो भवेत् ॥ ३९ ॥
वेलावल्यां प्रसिद्धो यः प्रयोगो निद्वयस्य हि ।
रागेऽत्रानुमतस्तज्ज्ञैर्यथायोग्यप्रमाणतः ॥ ४० ॥
केदारपूरवीवेलावलीभिः ककुभा मता ।
इति तरंगिणीग्रंथे लोचनेन प्रकीर्तितम् ॥ ४१ ॥
पग्रहो धविहीनोऽपि प्रारोहे तीव्रगोज्झितः ।
विठ्ठलाह्वोपलेनाथ वर्णितः पारिजातके ॥ ४२ ॥
संगतिः सपयोः प्रोक्ता कैश्चित्सा समयोरपि ।
अल्हैयाझिंझुटीयोगात्साधितोऽयं मतः क्वचित् ॥ ४३ ॥
जयावंती तथा वेलावल्यल्हैया तथैव च ।
मिलन्त्यत्र यथान्यायम् केचित्परे वदन्ति ते ॥ ४४ ॥

लच्छासाखः ।

वेलावलीसुमेले स्याल्लच्छाशाखो मतो बुधैः ।
वेलावलांगभूतत्वात्प्रातर्गेयः समीरितः ॥ ४५ ॥
संगतिर्धमयोः प्रोक्ता कुत्रचित्सपयोरपि ।
रागोऽयं नित्यसंपूर्णो निषादद्वयमंडितः ॥ ४६ ॥
धैवतः कीर्तितो वादी गांधारोऽमात्यसंनिभः ।
अवरोहेन वर्णेन वेलावल्यंगमादिशेत् ॥ ४७ ॥

प्रच्छन्नं लक्ष्यतेऽत्रापि झिंझुटचंगं क्वचित्क्वचित् ।
गांधारस्य प्रयोगे स्याद्गौडसारंगशंकनम् ॥ ४८ ॥
झिंझूट्यामथवा गौडसारंगे नैव लक्ष्यते ।
वेलावलांगप्राधान्यमत्र तत्स्यादवश्यकम् ॥ ४९ ॥
वेलावलप्रकारास्ते नित्यं स्युर्भ्रांतिकारकाः ।
केवलं लक्ष्यमाहृत्य बुधः कुर्यात्स्वनिर्णयम् ॥ ५० ॥
वेलावली ककुभाख्यो देशाख्यो लोकविश्रुतः ।
मते केषांचिदप्यत्र संमिलन्ति यथायथम् ॥ ५१ ॥

नटवेलावली ।

शंकराभरणान्मेलाज्जातो रागः सुनामकः ।
नटवेलावलीत्युक्तः संपूर्णो लक्ष्यविन्मते ॥ ५२ ॥
मध्यमः संमतो वादी संवादी षड्ज ईरितः ।
गानं तस्य समीचीनं प्रथमे यामके दिने ॥ ५३ ॥
पूर्वांगे नटयोगोऽत्र वेलावल्युत्तरांगके ।
मध्यमेन प्रयुक्तेन नित्यं स्याद्हृद्यंगमः ॥ ५४ ॥
सगगममस्वरैः स्यान्नटांगं सुपरिस्फुटम् ।
वेलावल्यवरोहेण रागयोगो भवेत्स्फुटः ॥ ५५ ॥

टिप्पनी ।

हंमीरो हेमकश्चैव यदा स्यातां सुमिश्रितौ ।
तदाल्हैया भवेल्लक्ष्य इतिमर्मज्ञसंमतम् ॥ ५६ ॥
शुद्धस्वरसमुद्भूता शुद्धवेलावली मता ।
कल्याणेमनकेदारा मिलन्त्यस्यां विदां मते ॥ ५७ ॥
गौडसारंगसंयोगाल्लच्छाशाखसमुद्भवः ।
जयावन्ती सुयोगेन ककुभाया भवेज्जनुः ॥ ५८ ॥




शुद्धकल्याणयोगे तु देवगिरिः समुद्भवेत् ।
भूपालीयोगतश्चासावौडुवाख्या मता जने ॥ ५९ ॥
केदारनाटयोगेन शुक्लवेलावली भवेत् ।
नटवेलावली योगान्नटाह्वा लक्ष्यविन्मते ॥ ६० ॥
मिश्रणादिमनाख्यस्य वेलावल्यां समुद्भवेत् ।
वेलावलीमनीसंज्ञा विहंगिनीमथो ब्रुवे ॥ ६१ ॥
विहंगस्य सुसंयोगे सैव स्याद्रक्तिदायिनी ।
सर्पर्दा संमता लक्ष्ये झिंझूटीयोगसंभवा ॥ ६२ ॥

मांडरागः ।

वेलावलीसुमेलाच्च मांडोत्पत्तिः प्रकीर्तिता ।
मारुमेवाडदेशेऽस्य श्रूयते लक्ष्यके जनुः ॥ ६३ ॥
षड्जस्वरो मतो वादी संवादी पंचमः स्मृतः ।
गानं सुसंमतं चास्य रंजकं सार्वकालिकम् ॥ ६४ ॥
प्राबल्यं समपानां तु निषादे कंपनं प्रियम् ।
प्रारोहे रिधदौर्बल्यं वक्रत्वमवरोहणे ॥ ६५ ॥
अभ्युच्छ्रयादलंकाराद्रागोऽयं निर्मितो बुधैः ।
इति केचिद्वदन्त्यत्र संगीतमर्मवेदिनः ॥ ६६ ॥
सनिधमपगमसैः स्वरै रागो भवेत्स्फुटः ।
क्षुद्रगीतार्हता तस्य लोके सर्वत्र संमता ॥ ६७ ॥

विहागरागः ।

मेले वेलावलस्यैव प्रोक्तो रागः सुनामकः ।
बिहाग इति विख्यातो गांधारांशग्रहो जने ॥ ६८ ॥
प्रारोहे रिधवर्ज्यं स्यादवरोहे समग्रकम् ।
रात्र्यां द्वितीयके यामे गानमस्य मनोहरम् ॥ ६९ ॥

प्राबल्याद्विधयोरत्र वेलावल्यंगमुद्भवेत् ।
अतस्तौ दुर्बलौ शिष्टावबरोहेऽपि मार्मिकैः ॥ ७० ॥

विरामो निस्वरे नित्यं भवेद्वैचित्र्यकारणम् ।
प्रायस्तत्रैव कुर्वन्ति श्रोतारो रागनिर्णयम् ॥ ७१ ॥

केचित्समादिशन्त्यत्र द्विमध्यमप्रयोजनम् ।
न तद्वोपास्पदं मन्ये रात्रिगेयस्वरूपके ॥ ७२ ॥

निषादः कोमलश्चास्मिन् प्रयुक्तश्चेद्विलोमके ।
विहागडासमुत्पत्तिर्भवेदिति विदां मतम् ॥ ७३ ॥

संमिश्रणाद्विहागाख्ये झिंझूट्यादेर्यथायथम् ।
पटपूर्वविहागस्य स्वरूपं संभवेत्स्फुटम् ॥ ७४ ॥

शंकरः ।

शुद्धस्वरसमुद्भूतः शंकरो लोकविश्रुतः ।
औडुवः षाडवश्चापि द्विविधो गीयते जने ॥ ७५ ॥

औडुवो रिमहीनत्वात् षाडवो मध्यमोज्झितः ।
गानमस्य समीचीनं रात्र्यां द्वितीययामके ॥ ७६ ॥

षड्जो गो वा भवेद्वादी विहागांगेन मंडनम् ।
लंघनान्मध्यमस्यैव विहागाद्भिन्नतापरिस्फुटा ॥ ७७ ॥

संगतिर्गपयोर्नित्यं विहागांगं निवारयेत् ।
पातः षड्जे तु गांधाराद्रागरूपं प्रकाशयेत् ॥ ७८ ॥

पनिधसनिस्वरैः स्याद्रागरूपं परिस्फुटम् ।
इति कैश्चित्समादिष्टं मर्मज्ञैर्गानकोविदैः ॥ ७९ ॥

केचिदेनं पुनः प्राहुः षड्जांशमुत्तरांगजम् ।
न तत्स्यात्संमतं लक्ष्ये वयं लक्ष्यानुवर्तिनः ॥ ८० ॥

शंकराख्ये तु रागे चेत्तीव्रमस्य प्रयोजनम् ।
शंकराराणकाख्यातं स्वरूपं संभवेद्ध्रुवम् ॥ ८१ ॥

शंकराख्ये पुनस्तद्वत् कल्याणांगस्य योजनात् ।
शंकराकरणोत्पत्तिः संभवेदिति विन्मतम् ॥ ८२ ॥

रागवृंदे तथाप्यत्र कामचारप्रवर्तनात् ।
लक्ष्यमार्गमनुल्लंघ्य बुधः कुर्याद्यथोचितम् ॥ ८३ ॥

नटरागः ।

वेलावलीसुमेलाच्च नटरागः समुत्थितः ।
मध्यमांशोऽथ मन्यासः संमतो गानवेदिनाम् ॥ ८४ ॥

प्रारोहेस्यात्सुसंपूर्णो विलोमे धगवर्जितः ।
गानमस्य समीचीनं रात्र्यां द्वितीययामके ॥ ८५ ॥

छायानाटस्तथाल्हैया कामोदाख्यस्तथैव च ।
मिलन्त्यस्मिन्यथायोग्यमिति लक्ष्यज्ञसंमतम् ॥ ८६ ॥

पूर्वांगस्य प्रधानत्वादल्हैया नैव संभवेत् ।
मुक्तमध्यमयोगेन छायाकामोदधारणम् ॥ ८७ ॥

रागतरंगिणीग्रंथे तथैव हृत्प्रकाशके ।
मेघरागस्य संस्थाने रागोऽयमुपलक्षितः ॥ ८८ ॥

वेलावलीसमुद्भूतो मांशो रिन्यासको नटः ।
अवरोहे गहीनश्च कीर्तितः पारिजातके ॥ ८९ ॥

गद्वयो निद्वयश्चापि कुत्रचित्समुदीरितः ।
यतस्तल्लक्ष्यरोधि स्यान्माननीयं न मे मते ॥ ९० ॥

नटनारायणो रागः शुद्धमेलसमुद्भवः ।
धदुर्बलस्तथा मांशो लक्ष्ये कैश्चित्समीरितः ॥ ९१ ॥

दुर्गा ।

शुद्धमेलसमुत्पन्ना दुर्गाख्या लोकविश्रुता ।
आरोहे चावरोहेऽपि गनिहीनैव संमता ॥ ९२ ॥
मध्यमः संमतो वादी कैश्चित्पंचम ईरितः ।
गानमस्याः सदाभीष्टं द्वितीयप्रहरे निशि ॥ ९३ ॥
शुद्धमल्लारिकाच्छाया यद्यप्यत्र लसेत्क्वचित् ।
धमरिपसुसंगत्या भवेत्तदपसारणम् ॥ ९४ ॥
गन्योरत्र विलुप्तत्वे सोरटथंगं कुतो भवेत् ।
रिधयोश्चात्र संगत्या रागः स्वातंत्र्यमावहेत् ॥ ९५ ॥
प्रयोगो मुक्तमस्यात्र नूनं चित्तहरो नृणाम् ।
वक्रत्वं प्रतिलोमस्य रागांगं स्फुटमाविशेत् ॥ ९६ ॥
निषादाभावतोऽप्यत्र न स्यात्सारंगसंभवः ।
संगतिर्धमयोश्चित्रा ह्यवश्यं रंजयेन्मनः ॥ ९७ ॥
ग्रंथेषु दाक्षिणात्यानां शुद्धसावेरिका तु या ।
कदाचित्सैव लक्ष्येऽत्र मर्मविद्भिरुरीकृता ॥ ९८ ॥

मलुहाकेदारः ।

केदारो मलुहानामा शुद्धमेलसमुत्थितः ।
श्यामकामोदसंयोगादुद्भूत इति विश्रुतम् ॥ ९९ ॥
केदारस्य प्रभेदोऽयं मन्यते लक्ष्यवेदिभिः ।
गानं चास्य समीचीनं द्वितीयप्रहरे निशि ॥ १०० ॥
केदारे प्रबला नित्यं षड्जमध्यमपंचमाः ।
सुप्रसिद्धं मतं त्वेतद्रागेऽस्मिन्नपि युज्यते ॥ १ ॥
संवर्धनं पुनश्चास्य मंद्रमध्यस्वरैर्भवेत् ।
विलंबितलये गीतो गांभीर्याधिक्यमावहेत् ॥ २ ॥

मंद्रस्थो मध्यमश्चात्र रागरूपं प्रदर्शयेत् ।
निषादात्षड्जसंस्पर्शो रागवैशिष्ट्यमीरयेत् ॥ ३ ॥
चांदनीजलधारौ च मलुहाख्यस्तृतीयकः ।
आधुनिका मता एते प्रभेदा लक्ष्यवर्त्मनि ॥ ४ ॥
तीव्रमस्य प्रयोगेण तथा कोमलनेरपि ।
केदारे चांदनीनामा प्रकारः संभवेत्ततः ॥ ५ ॥
मेघकेदारसंयोगाज्जलधारः समुद्भवेत् ।
संगिरंति पुनः केचिल्लक्ष्यलक्षणवेदिनः ॥ ६ ॥

हेमकल्याणः ।

शुद्धस्वरसमुद्भूतो हेमकल्याणनामकः ।
षाडवो रात्रिगेयोऽपि निहीनो लक्ष्यविन्मते ॥ ७ ॥
षड्जस्वरो भवेद्वादी संवादी पंचमो भवेत् ।
मंद्रमध्यस्वरैर्गीतोऽवश्यं स्याद्रक्तिदायकः ॥ ८ ॥
शुद्धकल्याणके रागे कामोदाख्यस्य योगतः ।
हेमः समुद्भवेल्लक्ष्य इति कैश्चित्प्रकीर्तितम् ॥ ९ ॥
आरोहे धैवतत्यक्तो मंद्रपोद्ग्राहमंडितः ।
विलंबितलये गीतो रागवैशिष्ट्यमादिशेत् ॥ १० ॥
रागोऽयं मलुहाच्छायां नूनं प्रदर्शयेत्क्वचित् ।
तथाप्यत्र निहीनत्वं रागभेदं समादिशेत् ॥ ११ ॥
क्षेमकल्याणनामाऽपि रागो लक्ष्ये क्वचिच्छ्रुतः ।
नासौ प्रसिद्धिवैधुर्यादस्माभिरत्र लक्षितः ॥ १२ ॥

देशिकारः ।

वेलावलसुमेलाच्च देशिकारः प्रजायते ।
औडुवो मनिहीनश्च संमतो गानवेदिनाम् ॥ १३ ॥

धैवतः संमतो वादी गांधारोऽमात्यतुल्यकः ।
रत्तरांगरधानोऽयं प्रातःकाले प्रगीयते ॥ १४ ॥
संगिरंति पुनः केचिदेनं विभासकं स्वयम् ।
मतेऽस्माकं विभासः स्याद्भैरवाख्यसुमेलजः ॥ १५ ॥
मारवामेलकेऽप्यन्यो विभासः समुदीरितः ।
गानं तस्यापि संप्रोक्तं लक्ष्ये भानूदयात्परम् ॥ १६ ॥
संध्याकाले यथा प्रोक्ता भूपाली गांशिका बुधैः ।
तथैव देशिकारोऽयं धांशकः प्रातरीरितः ॥ १७ ॥
अथवोत्तरगास्ते भवेयुः प्रतिमूर्तयः ।
स्वस्वपूर्वाग्ररागाणामिति प्रोक्तं मया पुरा ॥ १८ ॥
रिकोमलो मतोऽप्यसोऽपि देशिकारः प्रकीर्तितः ।
ग्रंथे रागविबोधाख्ये सोमनाथविपश्चिता ॥ १९ ॥
रागतरंगिणीग्रंथे रागोऽयं वर्णितः पुनः ।
गौरीमेलसमुद्भूतो रिधकोमलसंयुतः ॥ २० ॥
देशकारी मता पूर्णा गनितीव्रा च धांशिका ।
संगीतपारिजाताख्ये ग्रंथेऽहोबलधीमता ॥ २१ ॥

गुणकली।

वेलावलीसुमेलाच्च जातो रागो गुणिप्रियः ।
गुणकलीतिनामासौ सपसंवादशोभनः ॥ २२ ॥
यतो वेलावलांगेन गीयते लक्ष्यवर्त्मनि ।
गानं सुसंमतं तस्य प्रथमप्रहरे दिने ॥ २३ ॥
केचिद्गुणकलीं प्राहुः कल्याणांगविभूषिताम् ।
गांधारवादिनीं चापि साऽस्या भिन्ना परिस्फुटा ॥ २४ ॥
रागतरंगिणीग्रंथे गुणकरी समीरिता ।
गौरीमेलसमुत्पन्ना सा चास्या भेदमर्हयेत् ॥ २५ ॥

पहाडी

वेलावलाख्यमेलाच्च जाता पहाडिनामिका ।
सपसंवादसंपन्ना प्रारोहे मनिदुर्बला ॥ २६ ॥

मंद्रमध्यस्वरैश्चेयं भवेद्रक्तिप्रदायिनी।
मंद्रस्थो धैवतोऽप्यत्र स्फुटं रागांगमादिशेत् ॥ २७ ॥

दीर्घत्वात्स्वरयोर्मन्योर्भूपालीप्रकृतिं भजेत्।
गरिसाधपधसैः स्याद्रागरूपं परिस्फुटम् ॥ २८ ॥

शुद्धमध्यमसंस्पर्शो विलोमे संमतः क्वचित् ।
यतस्तेन स्वरेण स्याद्भूपालीभित्परिस्फुटा ॥ २९ ॥

ग्रंथेषु केषुचित्प्रोक्ता पाडी भैरवमेलने ।
व्यवहारे तु तद्रूपं सांप्रतं नैव गोचरम् ॥ ३० ॥

खमाजमेलजाप्यन्या पहाडी गीयते क्वचित् ।
स्वरूपं तन्मतं लक्ष्ये स्वतंत्रं गानकोविदैः ॥ ३१ ॥

खंमाजमेले ।

झिंझूटी ।

खंमाजमेलकोऽस्माकं कर्णाटसंज्ञितः पुरा ।
दाक्षिणात्यमते चासौ कांभोजीमेल उच्यते ॥ १ ॥

खंमाजमेलसंजाता झिंझूटी लोकविश्रुता ।
आरोहे चावरोहेऽपि संपूर्णा बहुसंमता ॥ २ ॥

गांधारोऽत्र मतो वादी संवादी निस्वरो भवेत्।
गानं चास्या भवेदिष्टं द्वितीयप्रहरे निशि ॥ ३ ॥

सुगमं सरलं रूपं मेलरागसमाश्रयम् ।
क्षुद्रगीतक्षमं चापि मन्यते लक्ष्यवर्त्मनि ॥ ४ ॥

धसरिगमगस्वरैर्भवेद्रूपं परिस्फुटम् ।
मंद्रमध्यस्वरैर्गीतं नूनंस्यादतिरक्तिदम् ॥ ५ ॥
आरोहेऽत्र रिसंयोगात् खंमाजो भिन्नतां भजेत् ।
सरलारोहणत्वाच्च स्वातंत्र्यं दर्शयेध्द्रुवम् ॥ ६ ॥

खंमाजः ।

खंमाजमेलनोत्पन्नो रागः खमाजनामकः ।
आरोहे रिस्वरत्यक्तः संपूर्णश्चावरोहणे ॥ ७ ॥
गांधारः संमतो वादी निषादो मन्त्रिसंनिभः ।
गानमस्य समीचीनं रात्र्यां द्वितीययामके ॥ ८ ॥
संगतिर्धमयोरत्र नित्यं रक्तिप्रदायिनी ।
निधमपधमगैः स्यात् खंमाजांगं परिस्फुटम् ॥ ९ ॥
आरोहे पंचमाल्पत्वमादिष्टं मर्मवेदिभिः ।
अवसानं तु गांधारे रागरूपं प्रदर्शयेत् ॥ १० ॥
खंमाजमेलजन्येषु रागेषु गानकोविदैः ।
प्रयोगस्तीव्रनेर्लक्ष्येऽनुमतो रक्तिलब्धये ॥ ११ ॥

तिलंगिका ।

खंमाजमेलसंजाता तिलंगिका बुधप्रिया ।
आरोहे चावरोहेऽपि रिधहीनैव संमता ॥ १२ ॥
गांधारः संमतो वादी निषादोऽमात्य ईरितः ।
गानमस्याः समादिष्टं द्वितीयप्रहरे निशि ॥ १३ ॥
खमाजप्रकृतिं धत्ते रागिणीयमसंशयम् ।
औडुवौडुवरूपत्वाद्रागभेदो भवेत्स्फुटः ॥ १४ ॥
स्वरैर्निपगमगैरेतद्रूपं परिस्फुटम् ।
श्रोतारोऽपि स्वरैरेतैः कुर्वन्ति रागनिर्णयम् ॥ १५ ॥

संगतिर्निपयोश्चात्र भवेद्रागांगदर्शिनी ।
धैवतस्य प्रलुप्तत्वात् खंमाजो नैव संभवेत् ॥ १६ ॥
निर्दिशन्ति क्वचिच्चात्रावरोहे रिप्रयोजनम् ।
लक्ष्यमार्गमनुल्लंघ्य बुधः कुर्याद्यथोचितम् ॥ १७ ॥
रागोऽयं दृश्यते लक्ष्ये गीतो खंमाजमिश्रितः ।
सनियमं भवेद्गानं तथाप्यस्य सुरक्तिदम् ॥ १८ ॥

खंबावती ।

खंमाजमेलसंजाता खंबावत्याह्वया जने ।
खंमाजनियमानां सा भवेत्प्रायो विपर्ययात् ॥ १९ ॥
प्रारोहे रिस्वरत्यक्तो खंमाजः सर्वसंमतः ।
रागिण्यामृषभस्त्वत्र प्रारोहे रक्तिवर्धकः ॥ २० ॥
मध्यमात् षड्जसंस्पर्शो विशिष्टां रक्तिमावहेत् ।
धपधमगमसैः स्याद्रागांगं सुपरिस्फुटम् ॥ २१ ॥
गांधारः संमतो वादी धैवतोऽमात्यतुल्यकः ।
गानमस्याः समीचीनं रात्र्यां यामे द्वितीयके ॥ २२ ॥
उत्तरांगस्वरैः किंचिद्रागीश्वयंगमुच्येवत् ।
मृदुगांधारहीनत्वात्पूर्वांगे नैव सा भवेत् ॥ २३ ॥
मधयोः संगतिश्चित्रा ह्यवरोहे पवक्रता ।
माडखंमाजयोगोऽत्र शंकितो लक्ष्यवेदिभिः ॥ २४ ॥
रागतरंगिणीग्रंथे तथा हृदयकौतुके ।
केदारमेलनोत्पन्ना खंबावती समीरिता ॥ २५ ॥

गारा ।

खंमाजमेलसंजाता गारा स्याल्लोकविश्रुता ।
आरोहे चावरोहेऽपि संपूर्णा लक्ष्यविन्मते ॥ २६ ॥

गांधारः संमतो वादी निषौवा मंत्रितुल्यकः।
गानमस्याः समीचीनं द्वितीयप्रहरे निशि ॥ २७ ॥
गांधारौ द्वौ निषादौ द्वौ निश्चितावत्र कोविदैः।
विलोमे कोमलौ प्रोक्तौ प्रारोहे तीव्रकौ निगौ ॥ २८ ॥
कल्याणीझिंझुटीयोगः कौशल्येन सुसाधितः ।
आरोहे प्रथमा व्यक्ता द्वितीया चावरोहणे ॥ २९ ॥
क्षुद्रगीतार्हताऽप्यस्या रागिण्या यदि संमता ।
सुगीताऽवश्यमेवैषा भवेच्चित्तापहारिणी ॥ ३० ॥
मंद्रस्थमध्यमे षड्जमारोप्यामध्यमध्यमम् ।
यदेयं गीयते तज्ज्ञैर्लोके रक्तिप्रदा मता ॥ ३१ ॥

## दुर्गा ।

खमाजमेलनेऽप्यन्या दुर्गा लक्ष्ये क्वचिच्छ्रुता ।
आरोहे चावरोहेऽपि रिपहीनैव लक्षिता ॥ ३२ ॥
गांधारोऽत्र मतो वादी साहचर्ये निषादकः ।
गानं समीरितं तज्ज्ञैर्द्वितीयप्रहरे निशि ॥ ३३ ॥
संगतिर्धमयोश्चात्र वागीश्वर्यंगसूचिनी ।
गांधारः कोमलस्तत्र स चात्रैवास्ति तीव्रकः ॥ ३४ ॥
धसंयोगात्पलुप्तत्वात्तैलंगीमित्यरिस्फुटा ।
संपूर्णः प्रतिलोमेऽसौ खमाजोऽस्या भजेन्निदाम् ॥ ३५ ॥
झिंझूटी तु सदा पूर्णा प्रारोहे चावरोहणे ।
एवं दुर्गा भवेल्लक्ष्ये स्वतंत्ररूपधारिणी ॥ ३६ ॥

## रागेश्वरी ।

खमाजमेलनोत्पन्ना रागेश्वरी मता बुधैः ।
आरोहे रिपहीनासौ विलोमे पंचमोज्झिता ॥ ३७ ॥

गांधारः कथ्यते वादी निषादोऽमात्य ईरितः ।
गानं सुसंमतं नित्यं द्वितीयप्रहरे निशि ॥ ३८ ॥
संगतिर्धमयोश्चात्र भवेद्रक्तिप्रदायिनी ।
प्रतिलोमगतो रिस्तु दुर्गाभेदं समादिशेत् ॥ ३९ ॥
रागाद्यलक्षणे ग्रंथे रागिणीयं सुलक्षिता ।
नाटकुरंजिकानाम्नी कर्णाटकबुधप्रिया ॥ ४० ॥

सोरटी ।

खंमाजमेलनोत्पन्ना सोरटी शास्त्रसंमता ।
आरोहे गधवर्ज्यं स्यादवरोहे समग्रकम् ॥ ४१ ॥
ऋषभः संमतो वादी संवादी धैवतो भवेत् ।
गानं सुसंमतं चास्या द्वितीयप्रहरे निशि ॥ ४२ ॥
गांधारस्य प्रयोगोऽत्र विलोमे घर्षणान्वितः ।
दौर्बल्यं तत्स्वरस्य स्यादनुलोमेऽपि विन्मते ॥ ४३ ॥
मध्यमादृषभे पातः सोरट्यां जीवभूतकः ।
श्रोतारः प्रायशस्तेन कुर्वन्ति रागनिर्णयम् ॥ ४४ ॥
प्राचुर्यान्निस्वरस्येह संभवेद्धंसनामकः ।
संपूर्णो ऽयंशको लक्ष्ये मर्मज्ञानां मतं त्विदम् ॥ ४५ ॥
मृदुगस्य मनाक्स्पर्शो देसाख्ये कैश्चिदीरितः ।
यतस्तेन मते तेषां सोरटी भिन्नतां भजेत् ॥ ४६ ॥
ऋषभादिस्तु सौराष्ट्री कम्पान्दोलितशोभिता ।
कर्णाटमेलने प्रोक्ता हृदयादिविवेकिभिः ॥ ४७ ॥
रागलक्षणके ग्रंथे सूरटी समुदीरिता ।
कांभोजीमेलनोत्पन्ना प्रारोहे गधवर्जिता ॥ ४८ ॥

## तिलककामोदः ।

खंमाजमेलसंजातः कामोदस्तिलकाद्यकः ।
संपूर्णो गीयते लक्ष्ये रात्र्यां द्वितीययामके ॥ ४९ ॥
प्रारोहे दुर्बलो धः स्याद्विवक्रं प्रतिलोमके ।
सोरठीदेसकांगेन प्रायो लक्ष्ये प्रगीयते ॥ ५० ॥
ऋषभः संमतो वादी पंचमोऽमात्यसंनिभः ।
संगत्या रिपयोर्नूनं भवेद्रक्तिप्रदो नृणाम् ॥ ५१ ॥
निषेधो मृदुनेरत्राविष्टः कैश्चिद्यतस्ततः ।
विद्वारीभिन्नवेत्स्पष्टा बुधः कुर्यात्स्वनिर्णयम् ॥ ५२ ॥
गांधारात्षड्जसंस्पर्शो विरामो निस्वरे तथा ।
पनिसरिगतानोऽपि भवेयू रागवाचकाः ॥ ५३ ॥
आरोहणे यतो रिः स्यात् खंमाजः संभवेत्कथम् ।
प्राचुर्याद्रुस्वरस्यात्र सोरठी नैव संभवेत् ॥ ५४ ॥
रागेश्वरी तथा दुर्गा रागिण्यौ पंचमद्विपे ।
द्विगांधारा मता गारा रिधत्यक्ता तिलंगिका ॥ ५५ ॥

## जयजयवन्ती ।

खंमाजमेलनाज्जाता जयावन्ती गुणिप्रिया ।
आरोहे चावरोहेऽपि संपूर्णा लक्ष्यसंमता ॥ ५६ ॥
ऋषभोऽत्र मतो वादी संवादी धैवतो भवेत् ।
गानं चास्याः समीचीनं द्वितीयप्रहरे निशि ॥ ५७ ॥
गांधारौ द्वौ निषादौ द्वौ रागिण्यामत्र संमताः ।
सारठीदेसकांगेन एषाऽपि स्यात्सुरक्तिदा ॥ ५८ ॥

द्विऋपिस्वररागेषु नियमः प्रायशः श्रुतः ।
कोमलाख्याः स्वरास्तत्र प्रयुक्ताः स्युर्विलोमके ॥ ५९ ॥
मंद्रस्थपंचमस्येह रिस्वरेण सुसंगतिः ।
छायानाटाह्वयस्यांगं कुत्रचित्संप्रदर्शयेत् ॥ ६० ॥
छायानाटगता पर्योः संगतिर्नात्र संभवेत् ।
वेलावली तथा गौडः सोरठ्यापि यथायथम् ॥ ६१ ॥
संमिलन्ति जयावन्त्यामित्यूचुः सांप्रदायिनः ॥
खंमाजमेलजन्येषु रागेषु लक्ष्यविन्मते ॥ ६२ ॥
रागिणीयं मता नित्यं परमेलप्रवेशिका ।
रागतरंगिणीग्रंथे तथा हृदयकौतुके ॥
कर्णाटमेलने प्रोक्ता जयावंती तु षाडिका ॥ ६३ ॥

टिप्पनी ।

खंमाजमेलजा रागा विभज्यन्ते द्विधा बुधैः ।
गांशका न्यंशकाश्चेति रहस्यं गुणिसंमतम् ॥ ६४ ॥
खंमाजांगा मता गांशाः सोरठांगास्तु न्यंशकाः ।
तत्वमेतत्स्मरेन्नित्यमुपदिष्टं विवेकिभिः ॥ ६५ ॥
झिंझुटी चाथ खंमाजो गारा दुर्गा तिलंगिका ।
रागेश्वरी मता एते गांधारांशेन मंडिताः ॥ ६६ ॥
सोरटी देसइत्याहुः कामोदस्तिलकाद्यकः ।
जयावंतीति रागास्ते न्यंशका लक्ष्यविन्मते ॥ ६७ ॥
जयावन्तीह सा नूनं द्विगांधारसुयोगतः ।
सूचयेत्परमेलं तं कर्णाटाख्यमसंशयम् ॥ ६८ ॥
मिश्ररागास्त्वनंतास्ते कस्तान् वर्णयितुं क्षमः ।
केवलं ते समुन्नीया लक्ष्यमालंब्य कोविदैः ॥ ६९ ॥

भैरवमेले ।

भैरवः ।

भैरवाख्यसुमेलाच्च जातो भैरवनामकः ।
आरोहे चावरोहेऽपि संपूर्णः सर्वसंमतः ॥ १ ॥
धैवतः संमतो वादी संवादी ऋषभो भवेत् ।
गानमस्य समादिष्टं प्रातःकालेऽतिरक्तिदम् ॥ २ ॥
प्रारोहे ऋषभाल्पत्वं संप्रोक्तं मर्मवेदिभिः ।
आंदोलनं तथैव स्याद्रिधयोरिति संमतम् ॥ ३ ॥
सायंकाले यथा प्रोक्तं वैचित्र्यं गनिषादयोः ।
रिधयोस्तत्तथैव स्यात्प्रातःकाले मते सताम् ॥ ४ ॥
ग्रंथेषु केषुचित्तत्र निषादः कोमलो मतः ।
अवरोहे न रक्तिघ्नो भूयादिति विदो विदुः ॥ ५ ॥
मध्यमस्य प्रभुक्तत्वं प्रयोगे लक्षितं क्वचित् ।
तत्स्वरादृषभे पातो रक्तिदो घर्षणान्वितः ॥ ६ ॥
भैरवोऽयं यथा प्रातः श्रीरागः सायमीरितः ।
एकस्मिन् धैवतो राजाऽन्यस्मिन् स्यादृषभस्तथा ॥ ७ ॥
आन्दोलितौ रिधावत्र यतो रागांगवाचकौ ।
दृढपरिश्रमेणैतौ प्रथमं साधयेद्बुधः ॥ ८ ॥
भैरवमेलजा लक्ष्ये प्रकारा बहवोऽपि ते ।
प्रातर्गेया मतास्तज्ज्ञैर्भैरवांगेन मंडिताः ॥ ९ ॥
शुद्धभैरवनामापि रागो ग्रंथेषु लक्षितः ।
स तु भैरविमेलोत्थो रिपवर्जित औडुवः ॥ १० ॥

बंगालभैरवः ।

भैरवाख्यसुमेलाच्च बंगालभैरवो मतः ।
आरोहे चावरोहेऽपि निषादस्वरवर्जितः ॥ ११ ॥

धैवतोऽत्र मतो वादी गवर्जश्चावरोहणे ।
गानं सुनिश्चितं तस्य प्रातःकाले मनीषिभिः ॥ १२ ॥
सधयोः संगतिश्चात्र भवेद्रक्तिप्रदायिनी ।
भैरवस्य प्रभेदो यद्भैरवांगं परिस्फुटम् ॥ १३ ॥
बंगाली चाथ बंगालो रागौ लक्ष्ये स्वतंत्रकौ ।
रहस्यं विश्रुतं त्वेतत्सर्वेषां गानवेदिनाम् ॥ १४ ॥

शिवभैरवः ।

भैरवे मेलने प्रोक्तो भैरवः शिवपूर्वकः ।
मिश्रमेलसमुत्पन्नो भैरवांगेनमंडितः ॥ १५ ॥
धैवतोऽत्र मतो वादी संवादी रिषभः स्मृतः ।
गानमस्य समीचीनं प्रत्यूषसमयोचितम् ॥ १६ ॥
द्विगांधाराद्विनिषादो गीयते लक्ष्यवर्त्मनि ।
प्रसिद्धिविधुरत्वात्तु रागोऽयं वादमूलकः ॥ १७ ॥
प्रारोहे गनितीव्रत्वाद्भैरवांगं प्रदर्शयेत् ।
अवरोहे गमृदुत्वादीपत्तोड्यंगमादिशेत् ॥ १८ ॥
मते केषांचिदप्येष शुद्धाख्यभैरवः स्वयम् ।
मृदुगनी रिपयुक्तः शुद्धाख्यः शास्त्रगोचरः ॥ १९ ॥
प्रयोगे धैवतस्तीव्रः क्वचिल्लक्ष्ये समीक्ष्यते ।
मनाक्स्पर्शगतो न स्याद्रक्तिहानिकरोऽप्यसौ ॥ २० ॥

आनंदभैरवः ।

मेलान्मालवगौळीयाज्जातो रागो गुणिप्रियः ।
आनंदभैरवाख्यातः संपूर्णो मांशकस्तथा ॥ २१ ॥
पूर्वांगे भैरवः प्रोक्तो वेलावल्युत्तरांगके ।
गानं समीरितं चास्य प्रातःकाले सुरक्तिदम् ॥ २२ ॥

आदिशन्ति पुनः केचिद्धमृदुमनुलोमके ।
तीव्रधं चावरोहेऽपि बुधः कुर्याद्यथोचितम् ॥ २३ ॥

रागोऽयं गीयते लक्ष्ये भैरवांगेन नित्यशः ।
अतो भैरवभेदोऽसौ संमतो लक्ष्यवर्त्मनि ॥ २४ ॥

आनंदभैरवीरागो गनिकोमलमंडितः ।
रागलक्षणके प्रोक्तः सचास्माद्भेदमर्हति ॥ २५ ॥

प्रमुक्तो मध्यमोऽप्यत्र भवेदतिमनोहरः ।
ऋषभांदोलनं स्पष्टं भैरवांगं प्रदर्शयेत् ॥ २६ ॥

## अहीरभैरवः ।

भैरवस्यैव मेलाच्च संजातोऽहीरभैरवः ।
आरोहे चावरोहेऽपि संपूर्णस्तद्विदां मते ॥ २७ ॥

मध्यमः संमतो वादी संवादी षड्ज ईरितः ।
गानमस्य समीचीनं प्रातःकाले सुरक्तिदम् ॥ २८ ॥

पूर्वांगे भैरवः स्पष्ट उत्तरांगे हरप्रिया ।
वैचित्र्यं तु भवेदत्र मिश्रणादंगयोर्द्वयोः ॥ २९ ॥

ऋषभस्तीव्रकोऽप्यत्र आरोहेऽनुमतः क्वचित् ।
मध्यमेन प्रमुक्तेन रागोऽयं स्यात्सुखावहः ॥ ३० ॥

रागलक्षणके ग्रंथे ह्यहीरी सांशिका मता ।
हनुमत्तोडिमेलोत्था तद्रूपं तु स्वतंत्रकम् ॥ ३१ ॥

## प्रभातभैरवः ।

भैरवस्यैव मेलाच्च जातः प्रभातभैरवः ।
आरोहे चावरोहे च संपूर्णः संमतः सताम् ॥ ३२ ॥

मध्यमोऽत्र भवेद्वादी संवादी षड्जनामकः ।
गानं चास्य समीचीनं प्रभातसमये शुभम् ॥ ३३ ॥

भैरवस्थौ रिधावत्र प्रातःकालप्रसूचकौ ।
प्रमुक्तमध्यमाचार्यं भैरवाङ्गेदमर्हयेत् ॥ ३४ ॥
मुक्तत्वान्मध्यमस्येह ललितांगं समुद्भवेत् ।
पंचमस्य प्रयोगेण तदंगं दूरतां व्रजेत् ॥ ३५ ॥
तीव्रमस्य मनाक्स्पर्शो लक्ष्येऽत्र दृश्यते क्वचित् ।
अवरोहे न रक्तिघ्नः स इत्युक्तं विचक्षणैः ॥ ३६ ॥

सौराष्ट्रभैरवः ।

भैरवे मेलने ख्यातो रागः सौराष्ट्रभैरवः ।
मिश्रमेलसमुत्थोऽसौ प्रातर्गेयो निदुर्बलः ॥ ३७ ॥
मध्यमः संमतो वादी संवादी षड्ज ईरितः ।
संपूर्णो गीयते लक्ष्ये धैवतद्वयसंयुतः ॥ ३८ ॥
प्रारोहे तीव्रधो युक्तः कोमलः स्याद्विलोमके ।
विचित्रं रूपकं चैतल्लक्ष्ये वैमत्यकारणम् ॥ ३९ ॥

रामकली ।

भैरवस्यैव मेलाच्च जातो रागः सुनामकः ।
रामकलीति विख्यातः संपूर्णो लक्ष्यविश्रुतः ॥ ४० ॥
धैवतोऽत्र मतो वादी कैश्चित्पंचम ईरितः ।
गानमस्य समीचीनं प्रातःकालेऽतिरक्तिदम् ॥ ४१ ॥
रागोऽयमुन्द्रतो लक्ष्ये मध्यमद्वयमंडितः ।
प्रायो मस्तीवकश्चेह प्रारोहणे प्रयुज्यते ॥ ४२ ॥
मुक्तत्वं मध्यमे युक्तं शुद्धे लक्ष्यविदां मते ।
रिधावान्दोलितावत्र भैरवांगप्रसूचकौ ॥ ४३ ॥
कोमलस्य निषादस्य प्रयोगः क्रियते यदा ।
तदा मपधनिधपतानः स्याद्रागवाचकः ॥ ४४ ॥

मंद्रमध्यस्वरैर्गीतो भैरवो रक्तिदो यथा ।
रामकली मता तज्ज्ञैर्मध्यतारस्वरैस्तथा ॥ ४५ ॥
रागलक्षणके ग्रंथे रामकली प्रकीर्तिता ।
आरोहे तु मनित्यक्ताऽवरोहे मध्यमोज्झिता ॥ ४६ ॥
रामक्रिया मता तत्रारोहे पंचमवर्जिता ।
अवरोह महीनाऽपि न तल्लक्ष्येऽत्र गोचरम् ॥ ४७ ॥
हृदयकौतुके ग्रंथे रामकरी सुलक्षिता ।
गौरीमेलसमुत्पन्ना पारोहे मध्यमोज्झिता ॥ ४८ ॥
रिधकोमलसंयुक्ता गनितीव्रा मतीवका ।
आरोहे मनिवर्ज्या च पांशाऽहोबलसंमता ॥ ४९ ॥

गुणकरी ।

मेलने भैरवस्यैव गुणकरी मता बुधैः ।
आरोहे चावरोहे च गनिवर्ज्या तथौडुवा ॥ ५० ॥
धैवतोऽत्र मतो वादी संवादी रिषभस्वरः ।
गानमस्याः समीचीनं प्रातःकाले सुरक्तिदम् ॥ ५१ ॥
रागोयं गीयते लक्ष्ये भैरवांगेन नित्यशः ।
भक्तिमार्गे प्रयुक्तः सन् तापत्रयं निवारयेत् ॥ ५२ ॥
उद्ग्राहो मरिसंगत्या क्वचिद् दृष्टः समाहृतः ।
संयुक्तो भैरवांगेन न रक्तिघ्नो मते मम ॥ ५३ ॥
संगत्या रिमयोरत्र जोगियांगं समुद्भवेत् ।
निषादाभावतोऽत्र स्याज्जोगियाभित् परिस्फुटा ॥ ५४ ॥
रिधकोमलसंयुक्ता गनिवर्ज्या गुणक्रिया ।
वर्णिताहोबलेनापि स्वग्रंथे पारिजातके ॥ ५५ ॥
गांधारवर्जिता प्रोक्ता लोचनेन विपश्चिता ।
अवरोहे निसंयुक्ता गौरीमेले परिस्फुटा ॥ ५६ ॥

जोगिया ।

भैरवस्यैव मेले स्याज्जोगिया लोकविश्रुता ।
गांधारस्वरसंत्यक्ता नित्यक्ता चाधिरोहणे ॥ ५७ ॥
मध्यमोऽत्र भवेद्वादी संवादी षड्ज ईरितः ।
गानमस्याः समादिष्टं प्रातःकाले सुरक्तिदम् ॥ ५८ ॥
रिमयोर्धमयोश्चात्र संगती बहुरक्तिदे ।
मध्यमस्य प्रमुक्तत्वं नित्यं रागांगमादिशेत् ॥ ५९ ॥
जोगिया प्रकृतिश्चेपत्सावेरीसदृशी मता ।
अवरोहे गसंयुक्ता सावेरी सर्वसंमता ॥ ६० ॥
सावेरी भैरवश्चात्र संमिलतो यथायथम् ।
इति समर्थितं कैश्चिन्न तद्भाति विसंगतम् ॥ ६१ ॥

कलिंगः ।

भैरवस्यैव मेले स्यात्कलिंगस्य मता जनुः ।
आरोहे चावरोहेऽपि कलिंगः पूर्ण ईरितः ॥ ६२ ॥
धैवतः पंचमो वाऽत्र स्वरो वादीतिसंमतः ।
गानं सुसंमतं चास्य चतुर्थप्रहरे निशि ॥ ६३ ॥
ऱ्हस्वत्वाद्रिधयोश्चात्र भैरवो नैव संभवेत् ।
चंचलप्रकृतिश्चायं संमतो लक्ष्यवेदिनाम् ॥ ६४ ॥
संपूर्णं सरलं रूपमेतत्सर्वगुणिप्रियम् ।
क्षुद्रगीतोपपन्नं च सर्वत्रैव सुरक्तिदम् ॥ ६५ ॥

विभासः ।

भैरवाख्यसुमेले च जातो रागो विभासकः ।
आरोहे चावरोहेऽपि निमध्यमविवर्जितः ॥ ६६ ॥

धैवतः संमतो वादी गांधारोऽमात्यतुल्यकः ।
गानं सुनिश्चितं तस्य प्रातःकालेऽतिरक्तिदम् ॥ ६७ ॥
विचित्रो गपसंगत्या सुशांतप्रकृतिः सदा ।
उत्तरांगप्रधानोऽयं प्रभाते हर्षयेन्मनः ॥ ६८ ॥
यत्र यत्र मनित्यागः संगतिर्गपयोर्भवेत् ।
सनियमं रहस्यं तत् पूर्वमेव मयोदितम् ॥ ६९ ॥
स्वरे पंचमके न्यासो धैवतात्क्रियते यदा ।
विभासांगं भवेत्स्पष्टमित्याहुर्लक्ष्यवेदिनः ॥ ७० ॥
संध्याकाले यथा रेवा तथा प्रातर्विभासकः ।
गांशिकाद्या मता तज्ज्ञैर्द्वितीयो धांशको मतः ॥ ७१ ॥

मेघरंजनी ।

भैरवमेलसंजाता रागिणी मेघरंजनी ।
आरोहे चावरोहेऽपि पधहीनैवसंमता ॥ ७२ ॥
मध्यमः संमतो वादी संवादी षड्ज ईरितः ।
गानं सुसंमतं तस्यास्तुरीये प्रहरे निशि ॥ ७३ ॥
मध्यमस्यात्रमुक्तत्वाल्ललितांगं परिस्फुटम् ।
धैवताभावतोह्यत्र तदंगं दूरतां व्रजेत् ॥ ७४ ॥
समयोः संगतिश्चेह समादिष्टा विवेकिभिः ।
विलंबितलये गीता रागिणीयं मनोहरेत् ॥ ७५ ॥
रागलक्षणके ग्रंथे मेघरंजनिका मता ।
मालवगौलके मेले पधहीनौडुवा ततः ॥ ७६ ॥

गौरी ।

मालवगौडके मेले गौरी शास्त्रेषु वर्णिता ।
आरोहे धगहीनासावरोहे समग्रिका ॥ ७७ ॥

ऋषभः स्यात्स्वरो वादी संवादी पंचमो भवेत् ।
गानं सुनिश्चितं तस्याश्चतुर्थप्रहरे दिने ॥ ७८ ॥

आदिशन्ति पुनः केचिदत्र तीव्रमयोजनम् ।
सायंगेये स्वरूपेऽस्मिन् भाति मे न विसंगतम् ॥ ७९ ॥

कलिंगांगा मता गौरी पूरियांगा तथैव च ।
मतं त्विदं प्रसिद्धं स्यात्सर्वत्र लक्ष्यवर्त्मनि ॥ ८० ॥

मंद्रस्थस्य निषादस्य वैचित्र्यमद्भुतं मतम् ।
श्रोतारः प्रायशस्तत्र कुर्वन्ति रागनिर्णयम् ॥ ८१ ॥

ललितपंचमः ।

भैरवाख्यसुमेलाच्च जातो ललितपंचमः ।
आरोहे तु पवर्ज्यं स्यात् पूर्णवक्रावरोहकम् ॥ ८२ ॥

मध्यमः संमतो वादी संवादी षड्ज ईरितः ।
गानं चानुमतं तस्य तुरीयप्रहरे निशि ॥ ८३ ॥

रागोऽयं गीयते लक्ष्ये ललितांगपरिष्कृतः ।
मध्यमावप्युभौ तत्र स्वीकृतौ गायनोत्तमैः ॥ ८४ ॥

मध्यमेन प्रमुक्तेन ललितांगं समुद्भवेत् ।
पंचमस्य प्रयोगेण बुधस्तत्परिमार्जयेत् ॥ ८५ ॥

अनूपसंगीतरत्नाकरे ।

औडुवः षाडवश्चैव संपूर्णश्च त्रिधा मतः ।
वसंतलंदकानंदस्वर्णाकर्पणपूर्वकाः ॥ ८६ ॥

गांधारपंचमाद्यश्च बहुलीपूर्वकस्ततः ।
रामभैरव इत्येवं भैरवो दशधा स्मृतः ॥ ८७ ॥

पूर्वीमेले ।

पूर्वी ।

पूर्वीतिनामके मेले स्यात्पूर्वी सुखदायिनी ।
आरोहे चावरोहेऽपि संपूर्णैव मता बुधैः ॥ १ ॥
गांधारः संमतो वादी निषादो मंत्रितुल्यकः ।
गानमस्याः समादिष्टं दिनान्तेऽतिमनोहरम् ॥ २ ॥
व्यवहारे प्रसिद्धैषा श्रीरागस्य कुटुंबिनी ।
उद्धारोऽस्या भवेद्युक्तः श्रीरागानन्तरं ततः ॥ ३ ॥
प्रयोगः शुद्धमस्याऽत्र सह गेन मतो मनाक् ।
अवरोहे न मे भाति रक्तिहानिकरोऽप्यसौ ॥ ४ ॥
निसरिगमगस्वरै रागांगं विशदीभवेत् ।
श्रोतारोऽपि सुखं तैश्च कुर्वन्ति रागनिर्णयम् ॥ ५ ॥
आदिशन्ति पुनः केचिद्रागेऽत्र तीव्रधैवतम् ।
तत्स्वरेण मते तेषां धनाश्रीभिद्भवेत्स्फुटा ॥ ६ ॥
धैवतद्वंद्वमप्याहुः केचिदन्ये विपश्चितः ।
लक्ष्यमार्गमनुलंघ्य बुधः कुर्यात्स्वनिर्णयम् ॥ ७ ॥
पूर्वी पूर्णा तथा गांशा सायंकालोचिता ततः ।
ग्रंथे रागविबोधाख्ये सोमनाथेन भाषिता ॥ ८ ॥
तथैव रागमंजर्यां पूर्वी गौडीसुमेलजा ।
वर्णिता पुंडरीकेण सायंगेयाऽथ सांशिका ॥ ९ ॥
सायंगेयेषु रागेषु तीव्रमोऽपेक्षितो यतः ।
मन्ये तज्ज्ञैः समादिष्टौ रागेऽत्र मध्यमावुभौ ॥ १० ॥

टिप्पनी ।

पूर्वीमेलोत्थिता रागा विभज्यन्ते द्विधा बुधैः ।
पूर्व्यंगाः पणमताश्चाथ पट् श्रीरागांगमंडिताः ॥ ११ ॥

श्रीगौरी मालवी टंकी वसंताख्या तथैव च ।
त्रिवेणीसहिता एते श्रीरागांगपरिष्कृताः ॥ १२ ॥
पूर्वी रेवाऽथ जेताश्रीर्विभासो दीपकस्तथा ।
परजाख्यो मता एते सर्वे पूर्व्यंगमंडिताः ॥ १३ ॥

श्रीरागः ।

पूर्वीमेलसमुत्पन्नः श्रीरागो लक्ष्यविश्रुतः ।
हरप्रियाह्वये मेले वर्णितोऽसौ पुरातनः ॥ १४ ॥
आरोहे गधवर्ज्यं स्यादवरोहे समग्रकम् ।
गानमस्य समादिष्टं दिनान्तेऽतिमनोहरम् ॥ १५ ॥
ऋषभः संमतो वादी संवादी पंचमो भवेत् ।
केचित्त्विपर्ययं मान्यं लक्ष्यानुवर्तिनः ॥ १६ ॥
गंभीरप्रकृतिर्नित्यं विलंबितलयान्वितः ।
अवश्यं स्याद्दिनान्तेऽसौ भुक्तिमुक्तिप्रदो नृणाम् ॥ १७ ॥
श्रीरागांगं स्वतंत्रं यन्मन्यते लक्ष्यवेदिभिः ।
सावधानं यथान्यायमभ्यस्यं प्रथमं बुधैः ॥ १८ ॥
रिपयोः संगतिश्चात्र भवेद्रागांगद्योतिका ।
सरिरिमस्वरैः स्पष्टं रागरूपं प्रदर्शयेत ॥ १९ ॥
पद्धत्यां दाक्षिणात्यानां श्रीरागो गीयतेऽधुना ।
खरहरप्रियामेलस्वररिति परिस्फुटम् ॥ २० ॥

गौरी ।

पूर्वीमेलसमुत्पन्ना द्वितीया गौरिरागिणी ।
आरोहे गधहीनासावरोहे समग्रिका ॥ २१ ॥
ऋषभः संमतो वादी संवादी पंचमो भवेत् ।
गानमस्याः समीचीनं दिनान्ते मरंजितम् ॥ २२ ॥

श्रीरागस्य प्रसिद्धांगं रागेऽत्राप्युपलभ्यते ।
मंद्रस्थानगतो निः स्यात्प्रायो रागांगवाचकः ॥ २३ ॥
आदिशंति पुनः केचिदत्र धैवतयोजनम् ।
अनुलोमे भवेद्येन श्रीरागभित्परिस्फुटा ॥ २४ ॥
श्रीरागे ऋषभो वादी गौरीस्यात्पंचमांशिका ।
इत्याहुः केचिदप्यन्ये रागभेदोपलब्धये ॥ २५ ॥

टिप्पनी ।

अथो प्रसंगतो वक्ष्ये मतभेदान्यथायथम् ।
पुरावृत्तं भवेद्गौर्या येन लोके परिस्फुटम् ॥ २६ ॥
श्रीरागः पंडितैः पूर्वैः काफीमेले प्रकीर्तितः ।
आरोहणे गधत्यक्तः पूर्णो वक्रोऽवरोहणे ॥ २७ ॥
युक्तं नु वर्णनं चैतत्तत्कालवर्तिलक्ष्यतः ।
मेलभेदे ह्यवश्यं स्याद्रागभेदः परिस्फुटः ॥ २८ ॥
लक्ष्ये नूत्नकालीने संगीते परिवर्तनात् ।
रागावेतावुभौ प्रोक्तौ पूर्वीमेलसमाश्रितौ ॥ २९ ॥
एकमेलाश्रितत्वे स्यात्समाने लक्षणेऽपि च ।
अवश्यं गायनं कष्टं ततो वैमत्यसंभवः ॥ ३० ॥
आदिशंति क्वचिद्गौर्यां समूलं गधवर्जनम् ।
लंघनं पंचमस्यैव कुत्रचित्समुदीरितम् ॥ ३१ ॥
अधुना गीयते गौरी लक्ष्ये श्र्यंगेन मंडिता ।
रिपसंवादसंपन्ना गत्यक्ता चाधिरोहणे ॥ ३२ ॥
गौडचधगा तथा न्यंशा सोमनाथेन भाषिता ।
तल्लक्षणापरा चैतीगौरी तेनैव कीर्तिता ॥ ३३ ॥
धीमता लोचनेनापि तरंगिण्यां प्रकीर्तिताः ।
श्रीगौरी चैतिकागौरी पहाडीगौरिका तथा ॥ ३४ ॥

आरोहे गधरिक्तास्ताः संपूर्णा अवरोहणे ।
प्रारोहे गधहीना सा निःकंपनमनोहरा ।
वर्णिताह्योवलेनासौ स्वग्रंथे पारिजातके ॥ ३५ ॥
मध्यमौ द्वौ यदा गौर्यां संप्रयुक्तौ यथायथम् ।
ललितापूर्विका गौरी भवेदिति सुसंमतम् ॥ ३६ ॥
मंद्रमध्यस्वरैर्गातः श्रीरागो रक्तिदो भवेत् ।
मध्यतारस्वरैर्गौरी भवेद्रक्तिप्रदायिनी ॥ ३७ ॥

मालवी ।

पूर्वमेलसमुत्पन्ना मालवी बहुसंमता ।
आरोहे स्यान्निदौर्बल्यमवरोहे तु धस्य तत् ॥ ३८ ॥
श्रीरागांगा यतो गेया वैचित्र्यं रिस्वरे स्फुटम् ।
गानमस्या भवेत्सायं सर्वरक्तिप्रदायकम् ॥ ३९ ॥
ऋषभः संमतो वादी संवादी पंचमो भवेत् ।
संगतिर्गपयोश्चात्र भवेद्वैचित्र्यकारिणी ॥ ४० ॥
अपूर्वं रूपकं त्वेतल्लक्ष्यज्ञैरनुशासितम् ।
रंजकं संमतं यस्माद्ग्राह्यमेव मनीषिणाम् ॥ ४१ ॥
रागलक्षणके ग्रंथे मालवी रागिणी मता ।
कांभोजीमेलसंभूता वक्ररूपा तथैव च ॥ ४२ ॥
ग्रंथे सारामृते प्रोक्ता रागिणीयं धगोज्झिता ।
मेले मालवगौलीये सायंगेयाऽथ सांशिका ॥ ४३ ॥

टिप्पनी ।

पूर्वी गौरी मालवी च ललिताऽथ वसंतिका ।
परजा पंचमाख्योऽपि शास्त्रे भैरवमेलजाः ॥ ४४ ॥
तथाप्येतेषु रागेषु सर्वेषु लक्ष्यतेऽधुना ।
तीव्रमस्य प्रयोगस्तद्विचार्यं मर्मवेदिभिः ॥ ४५ ॥

त्रिवेणी ।

पूर्वीमेलसमुत्पन्ना त्रिवेणी लोकविश्रुता ।
आरोहे चावरोहेऽपि मध्यमेन विवर्जिता ॥ ४६ ॥
ऋषभोऽत्रभवेद्वादी संवादी पंचमो भवेत् ।
गानं सुसंमतं चास्याः सायंकाले मनोहरम् ॥ ४७ ॥
श्रीरागांगेन यद्गीता लक्ष्ये सर्वत्र सांप्रतम् ।
ऋषभस्यैव वादित्वं भवेद्युक्तं सतां मते ॥ ४८ ॥
संगतिर्गपयोः सिद्धा मध्यमाभावतोऽत्र सा ।
अवरोहेण वर्णेन रागिणीयं मनो हरेत् ॥ ४९ ॥
गौरीमेलसमुत्पन्ना त्रिवेणी मस्वरोज्झिता ।
कीर्तिताहोबलेनापि स्वग्रंथे पारिजातके ॥ ५० ॥
धीमता हृदयेशेन त्रिवणः समुदीरितः ।
औडुवो मनिहीनोऽथ ग्रंथे हृदयकौतुके ॥ ५१ ॥
शुद्धरामक्रियामेले संपूर्णा सांशिका मता ।
त्रावणी पुंडरीकेण ग्रंथे चंद्रोदयाह्वये ॥ ५२ ॥
मारवामेलजां केचिदेनां पांशां ब्रुवन्ति हि ।
लक्ष्यमार्गमनुलंघ्य बुधः कुर्यात्स्वानिर्णयम् ॥ ५३ ॥
यद्यप्यंगीकृतं किंचिद्भवेद्रूपं मते सताम् ।
सुव्यक्तनियमाबद्धं नैव दोषास्पदं भवेत् ॥ ५४ ॥
देशिकारस्तथा गौरी तृतीया पूर्विरागिणी ।
त्रिवेण्यामत्र संयुक्ता इति लक्ष्यविदां मतम् ॥ ५५ ॥

टंकी ।

पूर्वीमेले सुविख्याता रागिणी टंकिका मता ।
भार्या प्रकीर्तिता लोके श्रीरागस्यैव पांशिका ॥ ५६ ॥

श्रीरागांगेन सा लक्ष्ये यतः सर्वत्र गीयते ।
गानं चाभिमतं नित्यं सायंकाले प्रतिष्ठितम् ॥ ५७ ॥

मालवी त्रिवणा गौरी पूर्वी टंकी तथैव च ।
मता एता बुधैः पंच श्रीरागस्य वरांगनाः ॥ ५८ ॥

महीनामथवा पूर्णामेनां गायन्ति गायकाः ।
त्रिवेण्यामृषभो वादी ह्यतस्तस्या भिदा स्फुटा ॥ ५९ ॥

वादिभेदाद्रागभेद इति लक्ष्यविदां मतम् ।
सर्वत्रैव प्रसिद्धं स्यान्महद्वैचित्र्यकारणम् ॥ ६० ॥

गौरीमेलसमुद्भूता सायंगेयाऽथ सांशिका ।
कीर्तिता पुंडरीकेण ग्रंथे मंजरिनामके ॥ ६१ ॥

पूर्वीश्रीकानडारागैः सह भैरवमेलनात् ।
टंकः प्रवर्तते लक्ष्ये लोचनेन प्रकीर्तितम् ॥ ६२ ॥

रागबोधे मतष्टकः सांशन्यासग्रहो ध्रुवम् ।
वसंतमेलने सायं सोमनाथेन धीमता ॥ ६३ ॥

दीपकः ।

पूर्वीमेलसमुत्पन्नो दीपको गुणिसंमतः ।
आरोहणे रिवर्ज्यं स्यादवरोहे निवर्जितम् ॥ ६४ ॥

षड्जस्वरो भवेद्वादी कैश्चित्पंचम ईरितः ।
गानं सुसंमतं चास्य दिने यामे तुरीयके ॥ ६५ ॥

केचिदेनं तु संपूर्णं निर्दिशन्ति विचक्षणाः ।
अन्ये प्राहुर्निहीनं तं कल्याणाख्यसुमेलजम् ॥ ६६ ॥

वेलावलसुमेलोत्थो निद्वयः श्रूयते क्वचित् ।
लक्ष्यगतमनुसृत्य बुधः कुर्यात् स्वनिर्णयम् ॥ ६७ ॥

आरोहे मनिवर्ज्यः स्याद्दीपको मालवोत्थितः ।
विदुपाहोब्वलेनैतदादिष्टं पारिजातके ॥ ६८ ॥
लुप्तोऽयं राग इत्युक्तं लक्ष्ये गानविशारदैः ।
न तन्मन्ये मतं तेषां केवलं युक्तिसंगतम् ॥ ६९ ॥
प्रज्वलनं स्वयं दृष्ट्वा दीपकानां सुदुष्करम् ।
कदाचित्स्याद्विलोपोऽस्य समादिष्टोऽत्र गायकैः ॥ ७० ॥
मिलित्वा गुणिभिर्लक्ष्यो ब्रूते लोचनपंडितः ।
कौतुकेऽपि तथैवोक्तं हृदयेशेन धीमता ॥ ७१ ॥

जेताश्रीः ।

पूर्वीमेलसमुत्पन्ना जेताश्रीर्बहुसंमता ।
आरोहे रिधवर्ज्यं स्यादवरोहे समग्रकम् ॥ ७२ ॥
गांधारांशाऽथवा पांशा गीयते लक्ष्यवर्त्मनि ।
गानं सुसंमतं तस्याः सायंकाले मनोहरम् ॥ ७३ ॥
मारवामेलजां चापि क्वचिदेनां ब्रुवन्ति हि ।
लक्ष्यमार्गमनुलंघ्य बुधः कुर्यात्स्वनिर्णयम् ॥ ७४ ॥
वराटी देशकारश्च धवलाख्या ततः परम् ।
सप्रमाणं मिलंत्यत्रेत्यूचुर्गानविशारदाः ॥ ७५ ॥
पूर्वीमेलसुसंजाता प्रारोहे रिधवर्जिता ।
जयश्रीः कीर्तिता तत्र पारिजातनिबंधके ॥ ७६ ॥
शुद्धरामक्रियामेले सोमनाथेन धीमता ।
जेताश्री रागिणी प्रोक्ता रिधाल्पा प्रातरिष्टदा ॥ ७७ ॥
गौरीमेलसमुत्पन्ना जयंतश्रीः प्रकीर्तिता ।
प्रारोहे रिधसंत्यक्ता हृदयेशेन कौतुके ॥ ७८ ॥

## पूरियाधनाश्रीः ।

कामवर्धनिकामेलाज्जाता पूर्याधनाश्रिका ।
आरोहे चावरोहेऽपि संपूर्णा बुधसंमता ॥ ७९ ॥
पंचमोऽत्र भवेद्वादी संवादी षड्ज ईरितः ।
गानमस्याः समीचीनं दिनान्तेऽतिमनोहरम् ॥ ८० ॥
स्वीकुर्वन्ति पुनः केचिदेनां धनाश्रिकां स्वयम् ।
काफीमेलोद्भवा तेषां मते भीमपलाशिका ॥ ८१ ॥
शुद्धमध्यमहीनत्वाद्वादित्वात्पंचमस्य च ।
रागिणीयं भवेद्भिन्ना पूर्व्या इति परिस्फुटम् ॥ ८२ ॥
श्रीरागस्य प्रसिद्धांगं न चैवात्रोपलभ्यते ।
अतस्तदंगभूतास्ते विविक्ताः सुखमंजसा ॥ ८३ ॥
उत्तरांगप्रधानेषु वसंतपरजादिषु ।
मध्यमद्वयसंयोगाद्यथं तत्रापि शंकनम् ॥ ८४ ॥
स्वरैर्निसरिगमगैर्यथा पूर्वी भवेत् स्फुटा ।
इयं परिस्फुटा लक्ष्ये स्यान्मरिगरिसस्वरैः ॥ ८५ ॥

## रेवा ।

पूर्वीमेलसमुत्पन्ना ख्याता रेवा गुणिप्रिया ।
आरोहे चावरोहेऽपि मनिहीनैव संमता ॥ ८६ ॥
न्यंशिका गांशिका वासौ सायंगेया बुधैर्मता ।
वर्जने निमयोः सिद्धा गपयोः संगतिः स्वयम् ॥ ८७ ॥
उत्तरांगप्रधानत्वे विभासांगं भवेत्स्फुटम् ।
निमयोर्यत्परित्यागस्तद्रागेऽपि सुसंमतः ॥ ८८ ॥
गौरीमेलसमुत्पन्ना विदुषाहोबलेन सा ।
मनित्यक्तोदिता रेवा गपादियमलस्वरा ॥ ८९ ॥

रिग्रहो रेवगुप्तिश्च रिन्यासो मनिवर्जितः ।
औडुवश्चरमे यामे दिनस्योक्तः कलानिधौ ॥ ९० ॥
रागलक्षणके ग्रंथे रेवगुप्तिः प्रकीर्तितः ।
मायामालवमेलाख्ये औडुवो मनिवर्जितः ॥ ९१ ॥
रागतरंगिणीग्रंथे लोचनेनापि कीर्तिता ।
रेवाख्या रागिणी तत्र गौरीमेलसमुत्थिता ॥ ९२ ॥

परजः ।

पूर्वीमेलसुसंजातः परजो विबुधप्रियः ।
आरोहे चावरोहेऽपि संपूर्णः सर्वसंमतः ॥ ९३ ॥
उत्तरांगप्रधानत्वात्तारषड्जांशशोभितः ।
गानमभीप्सितं तस्य नक्तं यामेऽन्तिमे सदा ॥ ९४ ॥
ग्रंथेषु वर्णितश्चायं मायामालवगौडजः ।
व्यवहारे तु मद्वंद्वो गीयते नैव संशयः ॥ ९५ ॥
रात्रिगेये स्वरूपेऽस्मिंस्तीव्रमस्य प्रयोजनम् ।
सुप्रमाणयुतं भूयाद्भूषणं न तु दूषणम् ॥ ९६ ॥
चपलप्रकृतिर्नित्यं क्षुद्रगीतसमाश्रयः ।
प्रायशो गीयते लक्ष्ये कलिंगमिश्रितो ध्रुवम् ॥ ९७ ॥
ग्रंथेषु दाक्षिणात्यानां परजः समुदीरितः ।
संपूर्णः सांशकश्चैव मायामालवगौडके ॥ ९८ ॥
गौरीमेलसमुत्पन्नो रागोऽयं समुदीरितः ।
हृत्प्रकाशाह्वये ग्रंथे वयं लक्ष्यानुवर्तिनः ॥ ९९ ॥

वसंत

पूर्वीमेलसुसंजातो वसंताख्यो बुधैर्मतः ।
संपूर्णस्तारषड्जांशो वसंततौ सुखप्रदः ॥ १०० ॥

मगयोः पुनरावृत्या विशिष्टां रक्तिमावहेत् ।
परजस्य विभिन्नत्वं तत्रैव प्रकटीभवेत् ॥ १०१ ॥
रागेऽस्मिन्गायकैः प्रायो ललितांगं प्रदर्श्यते ।
यतः स्यात्सुलभं तेन रागस्यास्य प्रभेदनम् ॥ १०२ ॥
ग्रंथेषु वर्णितो दृष्टो मेले मालवगौडके ।
रात्रिंगयो यतो लक्ष्ये तीव्रमे न विसंगतिः ॥ १०३ ॥
कुत्रचित्पंचमत्यक्तो मद्वंद्वस्तीव्रधान्वितः ।
लक्ष्येऽयं दृश्यते गीतो बुधः कुर्याद्यथोचितम् ॥ १०४ ॥
प्रचारो यादृशो यत्र तादृशं तं समाचरेत् ।
इति संगीतविज्ञोक्तं तत्त्वं नित्यं स्मरेद्बुधः ॥ १०५ ॥
वसंते पंचमोऽल्पः स्यादारोहे लक्ष्यविन्मते ।
रिनिधपमगमगस्वरै रूपं भवेत्स्फुटम् ॥ १०६ ॥
निदौर्बल्यं वसंते तत्प्राचुर्यं परजाह्वये ।
सरिनिसनिधनिभिः परजः प्रस्फुटो भवेत् ॥ १०७ ॥

मारवामेले ।

मारवा ।

मारवामेलनोत्पन्ना मारवा लक्ष्यविश्रुता ।
आरोहे चावरोहेऽपि पहीना षाडवा मता ॥ १ ॥
ऋषभोऽत्र मतो वादी कैश्चिद्धैवत ईरितः ।
गानं सुनिश्चितं चास्या दिनान्ते बहुरक्तिदम् ॥ २ ॥
सायंगेये स्वरूपेऽस्मिन् धांशत्वं न सुसंगतम् ।
प्राचीनैर्मारवा प्रोक्ता सांशा गांशाथवा ध्रुवम् ॥ ३ ॥
उत्तरांगे पहीनत्वाद्धिंदोलांगं प्रदर्शयेत् ।
हिंदोले रिपहीनत्वं रागभेदस्ततः स्फुटः ॥ ४ ॥

अपस्वरा पंचमी स्यात् षष्ठी हतस्वरा पुनः ।
प्रतापाद्या सप्तमी स्यादष्टमी तोडिकाद्विका ॥ २७ ॥
नागवराटी नवमी पुन्नागा दशमी स्मृता ।
एकादशी तु शोकाद्या कल्याणा द्वादशी मता ।
एवं द्वादशधा प्रोक्ता वराटी पूर्वसूरिभिः ॥ २८ ॥"

जैत्रः ।

मारवामेलनोत्पन्नो जैत्ररागः प्रकीर्तितः ।
आरोह चावरोहेऽपि मनित्यक्तो मतो बुधैः ॥ २९ ॥
पंचमोऽत्र भवेद्वादी संवादी षड्ज ईरितः ।
गानं तस्य समादिष्टं दिनान्त्ययामके प्रियम् ॥ ३० ॥
ऋषभद्वंद्वमत्राहुस्तथैव धैवतद्वयम् ।
सगयोः संगतिः प्रोक्ता तथैव सपयोः क्वचित् ॥ ३१ ॥
तीव्रमस्य प्रयोगोऽत्रानुमतो घर्षणान्वितः ।
अवरोहे मनाक् तज्ज्ञैर्गानसौकर्यहेतवे ॥ ३२ ॥
कल्याणमेलसंजातो जयत्कल्याणकाभिधः ।
पूर्वमेव मयाख्यातः स चास्माद्भिदमर्हयेत् ॥ ३३ ॥

मालीगौरा ।

मारवामेलने जाता मालीगौरा मता बुधैः ।
आरोह चावरोहेऽपि संपूर्णा लक्ष्यविन्मते ॥ ३४ ॥
ऋषभः संमतो वादी पंचमोऽमात्यतुल्यकः ।
गानं सुनिश्चितं सायं दिनान्त्ययामके बुधैः ॥ ३५ ॥
पूरियायां प्रविष्टश्चेत्स्वरः पंचमको यदा ।
तदा समुद्भवेन्मालीगौरारूपं मते सताम् ॥ ३६ ॥
श्रीरागपूरियायोगाद्गौरा स्यात्सुपरिस्फुटा ।
मंद्रमध्यस्वरैर्गीता भूयादतिमनोहरा ॥ ३७ ॥

प्रायशो धैवतद्वंद्वं प्रयुक्तमत्र गायकैः ।
सपयोः संगतिः स्पष्टं श्रीरागांगं प्रदर्शयेत् ॥ ३८ ॥
धानिसारिनिधपमगमधसस्वरैर्भवेत् ।
स्वरूपं मस्फुटं चास्या इत्याहुर्लक्ष्यवेदिनः ॥ ३९ ॥

साजगिरी ।

मारवामेलनोत्पन्ना साजगिरी जनप्रिया ।
आधुनिका मता तज्ज्ञैः संपूर्णा गांशिका तथा ॥ ४० ॥
धैवतद्वंद्वसंयुक्ता निमसंगतिशोभना ।
गानमस्याः समादिष्टं सायंकाले मनोहरम् ॥ ४१ ॥
मक्रमध्यमसंस्पर्शो भवेदत्रातिरक्तिदः ।
पूर्यायाः पूर्विकायाश्च तेनैव स्यात् स्फुटा भिदा ॥ ४२ ॥
भूषिता पूरियांगेन यतो गीतात्र प्रायशः ।
मंद्रमध्यस्वरैर्गानमवश्यं स्यात्सुखावहम् ॥ ४३ ॥
पूरिया पूर्विका चापि मिलतोऽत्र यथायथम् ।
इति समर्थितं लक्ष्ये गानशास्त्रविशारदैः ॥ ४४ ॥

सोहनी ।

मारवामेलसंजाता सोहनी बुधसंमता ।
आरोहे चावरोहेऽपि परिक्ता गीयते सदा ॥ ४५ ॥
धैवतः संमतो वादी गांधारो मंत्रिसंनिभः ।
गानमस्याः समीचीनं रात्रावन्तिमयामके ॥ ४६ ॥
प्रयोगो दृश्यते शुद्धमध्यमस्य कृतः क्वचित् ।
संगतिर्धगयोर्नित्यं रागरूपं समादिशेत् ॥ ४७ ॥
अन्त्ययामप्रगेयत्वात्तारषड्जविचित्रता ।
शोभते तत्र संगीतकेंद्रस्थानं क्रमागतम् ॥ ४८ ॥

## विभासः ।

मारवामेलकोत्पन्नो विभासः श्रूयते जने ।
संपूर्णो गीयते प्रातरंतिमांगप्रधानकः ॥ ५२ ॥
धैवतस्यैव वादित्वं संवादित्वं तु गस्य तत् ।
गपयोर्मधयोश्चापि संगती रक्तिकारणम् ॥ ५३ ॥
न्यसनं पंचमे नित्यं गांभीर्यं दर्शयेन्महत् ।
विलंबितलये गीतो रागोऽयं बहुरक्तिदः ॥ ५४ ॥
देशिकारस्तथा गौरी मिलतोऽत्र यथायथम् ।
इति कैश्चित्समादिष्टं गानशास्त्रविशारदैः ॥ ५५ ॥

## ललिता ।

मारवामेलनोत्पन्ना रागिणी ललिता मता ।
आरोहे चावरोहेऽपि पंचमेन विवर्जिता ॥ ५६ ॥
शुद्धमध्यमवादित्वं सर्वेषामेव संमतम् ।
अमात्यत्वं भवेत् षड्जे शास्त्रोक्तनियमागतम् ॥ ५७ ॥
उत्तरांगप्रधानत्वे तारषड्जविविक्तता ।
संगतिर्धमयोर्नित्यमपूर्वां रक्तिमावहेत् ॥ ५८ ॥
मध्यमस्य प्रभुत्वं कस्य न द्रावयेन्मनः ।
तत्स्वरेणैव लक्ष्ये स्याल्ललितांगं स्वतंत्रकम् ॥ ५९ ॥

ग्रंथे रागविबोधाख्ये ललिता समुदीरिता ।
शुद्धरामक्रियामेले धांशाऽपाथ धकोमला ॥ ६०॥
गौरीमेलसमुत्पन्ना ललिता पंचमोज्झिता ।
विट्ठलाहोबलेनोक्ता स्वग्रंथे पारिजातके ॥ ६१ ॥

पंचमः ।

मारवामेलसंजातः पंचमो लोकविश्रुतः ।
संपूर्णः शुद्धमांशोऽपि नक्तं यामेन्तिमे स्मृतः ॥ ६२ ॥
उत्तरांगप्रधानोऽयं द्विमध्यमविभूषितः ।
परजानन्तरं गीतो ह्यवश्यं रंजयेन्मनः ॥ ६३ ॥
मुक्तत्वान्मध्यमस्यात्र ललितांगं भवेत्स्फुटम् ।
ललिते पंचमस्त्यक्त इति भेदः परिस्फुटः ॥ ६४ ॥
मध्यमद्वयसंयुक्तः पंचमेन विवर्जितः ।
प्रकारः श्रूयते लक्ष्ये गायकानुमतोऽपरः ॥ ६५ ॥
हिंदोलांगयुतोऽपश्च प्रतिलोमे रिदुर्बलः ।
गीयतेऽसौ क्वचिल्लक्ष्ये गानशास्त्रविशारदैः ॥ ६६ ॥
ऋषभोनस्तथा पांशः पंचमः समुदीरितः ।
धीमता सोमनाथेन मेले मालवगौळके ॥ ६७ ॥
गौरीमेलसमुद्भूतः षहीनश्चानुलोमके ।
मध्यमांशस्तथा पूर्णो लोचनेन प्रकीर्तितः ॥ ६८ ॥
पंचमांशो रिरिक्तोऽपि प्राप्तः पंचम ईरितः ।
रागचंद्रोदये ग्रंथे मालवगौडमेलजः ॥ ६९ ॥

भट्टिहारः ।

मारवामेलनोत्पन्नो भट्टिहारः प्रकीर्तितः ।
आरोहे चावरोहेऽपि संपूर्णो लक्ष्यविन्मते ॥ ७०॥

मध्यमोऽत्र मतो वादी संवादी षड्ज ईरितः ।
गानं सुसंमतं तस्य रात्र्यामन्तिमयामके ॥ ७१ ॥
शुद्धमोऽत्र भवेन्मुक्तस्तत्रैव न्यसनं शुभम् ।
प्रयोगस्तीव्रमस्यास्मिन् रात्रिगेयत्वसूचकः ॥ ७२ ॥
पगयोर्धमयोश्चापि संगतिः स्यान्मनोहरा ।
अनुलोमे निर्दौर्बल्यं विलोमे वक्रता मिया ॥ ७३ ॥
खंमाजमेलसंजातो भटियारः श्रुतः क्वचित् ।
लक्ष्यमार्गमनुसृत्य कुर्याद्बुधः स्वनिर्णयम् ॥ ७४ ॥
रागतरंगिणीग्रंथे भटियालः प्रकीर्तितः ।
गौरीमेलसमुत्पन्नः पंचमेन विवर्जितः ॥ ७५ ॥

भंखारः ।

मारवामेलसंजातो भंखारो गीयते जने ।
आधुनिकं वदंतीमं केचिल्लक्ष्यविचक्षणाः ॥ ७६ ॥
संपूर्णः पंचमांशः स्यादुत्तरांगप्रधानकः ।
यामे तुरीयके रात्र्यां गानमस्य सुखप्रदम् ॥ ७७ ॥
मध्यमद्वयसंयोगाद्विभासो भिन्नतां व्रजेत् ।
मुक्तमस्य तिरोभावे भट्टिहारो न संभवेत् ॥ ७८ ॥
पगयोर्मधयोश्चेह संगतिः स्यान्मनोहरा ।
अप्रसिद्धस्वरूपत्वाद्गानमस्य सुदुर्लभम् ॥ ७९ ॥

टिप्पनी ।

एवं च मारवामेले रागा द्वादश लक्षिताः ।
सायंगेया भवेयुः षट् प्रातर्गेयाः षडीरिताः ॥ ८० ॥
पूरिया मारवा जैत्रो गौरा साजगिरी तथा ।
वराटी सहिता एते सायंगेया मता बुधैः ॥ ८१ ॥

ललितः पंचमश्चैव भट्टिहारो विभासकः ।
भंखारः सोहनी चेति प्रातर्गेयाः समीरिताः ॥ ८२ ॥
गौर्यंगाः पूरियांगाश्च सायंगेया व्यवस्थिताः ।
ललितांगास्तथा प्रोक्ताः सोहन्यंगाः प्रभातगाः ॥ ८३ ॥
सायंगेयेषु पूर्वांगं प्रबलं गुणिसंमतम् ।
प्राबल्यमुत्तरांगे स्यात् प्रातर्गेयेषु निश्चितम् ॥ ८४ ॥
स्थूलदृष्टिकृता एते नियमा मार्गदर्शकाः ।
विशेषास्तु तत्रतत्र द्रष्टव्या मर्मवेदिभिः ॥ ८५ ॥

काफीमेले ।

काफी ।

हरप्रियाख्यमेलोऽसौ लक्ष्येऽत्र काफिसंज्ञितः ।
काफीरागस्तदुत्थः स्यादिति लक्ष्यविदां मतम् ॥ १ ॥
पंचमः संमतो वादी संवादी षड्जनामकः ।
केचिद्गांधारमाहुस्ते वादिनं गानकोविदाः ॥ २ ॥
मध्यरात्रोचितो मेलो यथायं गनिकोमलः ।
मध्याह्नार्हस्तथैवासौ को न जानाति मर्मवित् ॥ ३ ॥
दरबार्यादिकान् रागान्नक्तं गीत्वा धकोमलान् ।
तीव्रधैवतसंपन्नान् गायन्ति गायकाः क्रमात् ॥ ४ ॥
आसावर्यादिकान् गीत्वा दिवा धैवतकोमलान् ।
सारंगाख्यादिकान् लोके गायन्ति शुद्धधैवतान् ॥ ५ ॥
संभवेयुरवश्यं तेऽपवादा लक्ष्यवर्त्मनि ।
साधारणो मया प्रोक्तो नियमस्तत्वदर्शिनाम् ॥ ६ ॥
यतः संपूर्णरागोऽयमारोहे चावरोहणे ।
लोक आश्रयरागत्वं काफीरागस्य संमतम् ॥ ७ ॥

काफीत्याधुनिकं नाम पारसीकं परिस्फुटम् ।
स्वीकृतं यत्पुराणैस्तत्रैवास्माभिरुपेक्षितम् ॥ ८ ॥
दाक्षिणात्यमते काफीरागः श्रीरागमेलजः ।
श्रीरागः कीर्तितस्तत्र गनिकोमलमंडितः ॥ ९ ॥
हिंदुस्थानीयपद्धत्यां श्रीरागः पूर्विमेलजः ।
इति मया समाख्यातं पूर्वमेव सविस्तरम् ॥ १० ॥
न्यासः पंचमके काफ्यां सुस्पष्टं रागवाचकः ।
श्रोतारोऽपि सुखं तेन कुर्वन्ति रागनिर्णयम् ॥ ११ ॥
अनुलोमगतः क्षम्यः प्रयोगस्तीव्रनेर्मनाक् ।
काफीमेलोत्थरागेषु गानसौकर्यहेतवे ॥ १२ ॥
क्षुद्रगीतार्हता काफ्यां लोके सर्वत्र संमता ।
शृंगाररसभूयिष्ठां काफीं शंसन्ति पंडिताः ॥ १३ ॥

टिप्पनी ।

हिंदुस्थानीयपद्धत्यां रागाः काफ्याह्वमेलजाः ।
पंचांगेषु विभक्ताः स्युर्लक्ष्यमार्गानुसारतः ॥ १४ ॥
काफ्यंगं प्रथमं प्रोक्तं धनाश्र्यंगं द्वितीयकम् ।
सारंगांगं तृतीयं स्याच्चतुर्थं कानडाह्वयम् ॥ १५ ॥
स्यात्पंचमं मलाराख्यं भूरिरक्तिप्रदायकम् ॥
अथो वक्ष्ये क्रमाद्रागांस्तान् पंचांगानुसारतः ॥ १६ ॥
काफी सिंदूरकः पीलू रागाः काफ्यंगमंडिताः ।
धनाश्रीधानिका भीमपलाशी हंसकंकणी ॥ १७ ॥
प्रदीपकी मता एता धनाश्र्यंगपरिष्कृताः ।
वागीश्वरी बहारश्च सुहा सुघ्राइका तथा ॥ १८ ॥
नायकी साहना तद्वद्देशाख्यः कौशिकाह्वयः ।
रागाः प्रकीर्तितास्तज्ज्ञैः कानडांगसुशोभनाः ॥ १९ ॥

शुद्धसारंगसामंतो मध्यमादिस्तथैवच ।
वृंदावनी वृद्धहंसो मीयांसारंगनामकः ॥ २० ॥
लंकाद्यदहनः पटमंजरी काफिमेलजा ।
रागा एते मता अष्टौ सारंगांगविभूषिताः २१ ॥
मल्लारः शुद्धपूर्वोऽथ मीयांमल्लारकाभिधः ॥
गौंडमल्लारको मेघः सूरमल्लारसंज्ञितः ॥ २२ ॥
रामदासी तथा चर्जूचंचलाख्यौ च धूलिया ॥
मीरामल्लारकः प्रोक्ता मल्लारांगप्रदर्शिनः ॥ २३ ॥

सैंधवी ।

काफीमेलसमुत्पन्ना सैंधवी कथ्यते जने ।
आरोहणे गनित्यक्ता संपूर्णा चावरोहणे ॥ २४ ॥
सपयोरेव संवादः कैश्चित्स रिधयोर्मतः ।
गानमस्याः समादिष्टं प्रायशः सार्वकालिकम् ॥ २५ ॥
वैमत्यं दृश्यते लोके निषादपरिवर्जने ॥
प्रयोगस्तत्स्वरस्येह क्षम्यते रोहणे मनाक् ॥ २६ ॥
लक्ष्ये तु गायनाः प्रायः काफीमिश्रितरूपकम् ।
प्रदर्शयन्ति सैंधव्या लोकरंजनवांछिनः ॥ २७ ॥
सिंधोडानामिका सैव सैंधवीति परिस्फुटम् ।
रागपूर्वविबोधे स्यात्सोमनाथेन कीर्तितम् ॥ २८ ॥
भगनिः सैंधवी प्रोक्ता स्वग्रंथे तेन सूरिणा ।
प्रतिलोमे तु संपूर्णा पारिजाते समीरिता ॥ २९ ॥
काफीमेलसमुत्पन्नः सैंधवो धैवतादिकः ।
आरोहे गनिवर्ज्योऽपि हृदयेशेन कीर्तितः ॥ ३० ॥

पीलु ।

काफीमेलसमुत्पन्नः पीलुरागो गुणिप्रियः ।
आधुनिकस्तथैवासौ पारसीकोऽपि संमतः ॥ ३१ ॥
गांधारः संमतो वादी संवादी सप्तमो भवेत् ।
गानं चास्य समादिष्टं तृतीयप्रहरे दिने ॥ ३२ ॥
मते केषांचिदप्येष भिन्नषड्जसुमेलजः ।
प्रारोहे ऋषभत्यक्तो गनिसंवादमंडितः ॥ ३३ ॥
यथायोगं मिलंत्यत्र स्वरास्तीव्राश्च कोमलाः ।
संकीर्णं रूपकं त्वेतन्नित्यं स्याज्जनमोहनम् ॥ ३४ ॥
काफी गौरी तथा भीमपलासी भैरवी क्वचित् ।
रागेऽस्मिन् संमिलन्त्याहुर्लक्ष्यलक्षणकोविदाः ॥ ३५ ॥
प्रायस्तीव्रस्वराणां स्यात्प्रारोहे सुप्रयोजनम् ।
विलोमे कोमलानां सन्नियमो भाति मे स्फुटः ॥ ३६ ॥
क्षुद्रगीतार्हता पीलूरागस्य संमता जने ।
मिश्ररूपेण रागोऽयं नित्यं सहजसुंदरः ॥ ३७ ॥

भीमपलासी ।

काफीमेलसुसंजाता प्रोक्ता भीमपलासिका ।
आरोहे रिधहीनं स्यादवरोहे समग्रकम् ॥ ३८ ॥
मध्यमांशग्रहन्यासा मुक्तमध्यममंडिता ।
गानमस्याः समीचीनमपराह्णे सुसंमतम् ॥ ३९ ॥
वादित्वान्मध्यमस्यात्र धनाश्रीर्नैव संभवेत् ।
पूर्णत्वं प्रतिलोमे यद्धानीशंका कुतो भवेत् ॥ ४० ॥
मते केषांचिदप्येषा रिधकोमलमंडिता ।
केचिद्रिवर्जनं प्राहुरन्ये धैवतवर्जनम् ॥ ४१ ॥

एकैकश्रुत्यपकृष्टौ क्वचिद्द्विधौ समीरितौ ।
लक्ष्यमार्गमनुसृत्य बुधः कुर्याद्यथोचितम् ॥ ४२ ॥

संमतं श्रुतिभिन्नत्वे रक्तिभिन्नत्वमंजसा ।
मते मे वादिभिन्नत्वं पर्याप्तं लक्ष्मभेदकम् ॥ ४३ ॥

ग्रंथेषु रागभेदास्तु श्रुत्यायत्ता न लक्षिताः ।
तद्विधानं न चावश्यं रागभेदोपलब्धये ॥ ४४ ॥

धनाश्रीः ।

काफीमेलसमुद्भूता धन्याश्रीः कथिता जनैः ।
प्रारोहे रिधहीनाऽसौ संपूर्णा प्रतिलोमके ॥ ४५ ॥

पंचमः संमतो वादी मंत्री षड्जः समीरितः ।
लक्ष्ये सुसंमतं गानं तृतीयप्रहरे दिने ॥ ४६ ॥

ग्रहः प्रायो निषादः स्यान्न्यासः स्यात् पंचमाह्वयः ।
संगतिः पगयोश्चित्रा विलोमे तद्विदां मते ॥ ४७ ॥

वादित्वे मध्यमस्यात्र लसेच्छ्रीमपलाशिका ।
प्रारोहे रिधसंत्यक्ता मध्यमांशसमन्विता ॥ ४८ ॥

तृतीययामगेयेषु रागेषु परिदृश्यते ।
दौर्बल्यं रिधयोः प्रायोऽनुलोमे लक्ष्यविन्मते ॥ ४९ ॥

दुर्बलत्वात्तयोस्तत्र प्राबल्यं समपेषु तत् ।
पवादित्वे धनाश्रीः स्यान्मांशत्वे स्यात्पलाशिका ॥ ५० ॥

शुद्धमेलसमुत्पन्ना प्रारोहे रिधवर्जिता ।
धनाश्रीः कीर्तिता तत्र संगीतपारिजातके ॥ ५१ ॥

ग्रंथेषु केषुचित्प्रोक्ता धनाश्री रिधवर्जिता ।
प्रातर्गेया तथा षड्ग्रहांशा काफिमेलजा ॥ ५२ ॥

नित्यं पमुद्रिता प्रोक्ता रिधोना सांशिका तथा ।
धनाश्रीर्धवलाद्यासौ विबोधे रागपूर्वके ॥ ५३ ॥

धानी ।

हरप्रियाख्यमेलाच्च धानीति संज्ञिता जने ।
रागिणी स्यात्समुत्पन्ना सुरसा सार्वकालिका ॥ ५४ ॥
आरोहे चावरोहेऽपि वर्जितर्षभधैवता ।
गांधारोऽत्र मतो वादी निषादोऽमात्यसंनिभः ॥ ५५ ॥
औडुवषाडवा चापि विलोमे ऋषभान्विता ।
क्वचित्समीक्षिता लक्ष्ये इति प्रज्ञा वदन्ति ते ॥ ५६ ॥
रिहीना रिधहीना वा साहोबलेन कीर्तिता ।
तथैव तत्त्वबोधेऽसौ श्रीनिवासविनिर्मिते ॥ ५७ ॥
रागलक्षणके ग्रंथे शुद्धधन्नासिकेरिता ।
हरप्रियाव्हये मेले ऋषभधैवतोज्झिता ॥ ५८ ॥
कदाचिदसैव लक्ष्येऽत्र धानिसंज्ञा समीरिता ।
इत्याहुः पंडिताः केचिल्लक्ष्यलक्षणकोविदाः ॥ ५९ ॥
वादमूले तथाप्यत्र विषये तत्त्वदर्शिभिः ।
लक्ष्यगतमनुलंघ्य कार्यं नित्यं स्ववर्तनम् ॥ ६० ॥
समपानां तु दौर्बल्ये ह्यभावे रिधयोस्तथा ।
कुतो गांभीर्यसंप्राप्तिर्भवेन्नैव सतां मते ॥ ६१ ॥

हंसकंकणी ।

काफीमेलसमुत्पन्ना रागिणी हंसकंकणी ।
लक्ष्याध्वनि बुधैर्गीता तृतीयप्रहरे दिने ॥ ६२ ॥
प्रारोहे रिधहीना स्यात्संपूर्णा प्रतिलोमके ।
धनाश्रंगप्रगीतासौ भूरिरक्तिप्रदायिका ॥ ६३ ॥

गांधारद्वययोगोऽत्र कौशल्येन प्रदर्शितः ।
रोहणे तीव्रगो युक्तो विलोमे कोमलाह्वयः ॥ ६४ ॥
पंचमः संमतो वादी संवादी षड्ज ईरितः ।
धनाश्रयंगप्रधानत्वं रागेऽस्मिन् सर्वसंमतम् ॥ ६५ ॥
विचित्रमप्रसिद्धं च रूपमेतदसंशयम् ।
गीयते लक्ष्यमार्गेऽत्र केवलं गायनोत्तमैः ॥ ६६ ॥

प्रदीपकी ।

स्यात्काफीमेलसंजाता प्रदीपकी सुसंमता ।
प्रारोहे रिधहीनं स्यादवरोहे समग्रकम् ॥ ६७ ॥
मंजरीं रागिणीं गीत्वा यद्वेयारभ्यते पुनः ।
किंचिद्वर्णनीयं तद्वैचित्र्यमनुभूयते ॥ ६८ ॥
मंद्रमध्यस्वरैः सैव पलाशिकां प्रसूचयेत् ।
पलाशी मांशिका नित्यं सांशिकेयं मता जने ॥ ६९ ॥
मते केषांचिदप्येषा मध्यमस्वरवादिनी ।
प्रतिलोमगतो रिः स्याद्सत्यायोऽतिदुर्बलः ॥ ७० ॥
ईषन्मृदू समादिष्टौ कैश्चिदत्र रिधैवतौ ।
एतन्मर्मपरिज्ञानं केवलं विदुषां भवेत् ॥ ७१ ॥
तीव्रगांधारयोगोऽत्र कौशल्येन सुसाधितः ।
विश्लिष्टो मध्यमोऽपि स्यात् कंकणीभेददर्शकः ॥ ७२ ॥

वागीश्वरी ।

हरिप्रियाह्वये मेले वागीश्वरी मता बुधैः ।
प्रारोहणे पवर्ज्यं स्यात्प्रतिलोमे समग्रकम् ॥ ७३ ॥
मध्यमः कीर्तितो वादी संवादी षड्ज ईरितः ।
गानं सुसंमतं तस्या रात्र्यां तृतीययामके ॥ ७४ ॥

लंघनं पंचमस्य स्यात्समूलं लक्ष्यके क्वचित् ।
अल्पत्वं पंचमे युक्तं प्रतिलोमे सतां मते ॥ ७५ ॥
धनाश्रीकानडायुक्ता वागीश्वरी प्रकीर्तिता ।
रागतरंगिणीग्रंथे लोचनेन मनीषिणा ॥ ७६ ॥
त्यक्ते पंचमके सद्यो ग्रंथोक्ता रागिणी भवेत् ।
पवर्जिता तथा मांशा श्रीरंजनीतिनामिका ॥ ७७ ॥
दाक्षिणात्यमते त्वेषा रीतिगौडाख्यरागिणी ।
ग्रंथेषु केषुचित्तत्र वागीश्वरी द्विगा मता ॥ ७८ ॥

बहारः ।

हरप्रियाह्वयान्मेलाज्जातो रागो गुणिप्रियः ।
आधुनिको बहाराख्यश्चंचलप्रकृतिः सदा ॥ ७९ ॥
मध्यमः संमतो वादी संवादी षड्जनामकः ।
गानं नित्यं समादिष्टं वसंततौ सुरक्तिदम् ॥ ८० ॥
मधयोः संगतिश्चित्रा रिहीनत्वं तु रोहणे ।
प्रतिलोमे धहीनत्वमिति मर्मविदां मतम् ॥ ८१ ॥
प्रारोहे मधसंगत्या वागीश्वर्यंगमावहेत् ।
अवरोहे धलुप्तत्वात्तदंगं परिमार्जयेत् ॥ ८२ ॥
संयोगः स्याद्बहारस्य नानारागेषु लक्षितः ।
यथासंज्ञं बुधः कुर्यात्तत्र स्वरप्रयोजनम् ॥ ८३ ॥

सूहारागः ।

काफीमेलसमुत्पन्नः सूहवो लोकविश्रुतः ।
आरोहे चावरोहेऽपि धैवतो वर्जितस्वरः ॥ ८४ ॥
मध्यमः संमतो वादी संवादी षड्जनामकः ।
गानं समीरितं लोके द्वितीये प्रहरे दिने ॥ ८५ ॥

यद्यप्युत्तरभागेऽत्र रूपं सारंगसंनिभम् ।
पूर्वांगे व्यक्तगांधारः कुर्यात्तस्य निवारणम् ॥ ८६ ॥
मुक्तत्वं मध्यमस्येह नूनं स्यादतिरक्तिदम् ।
निपयोः संगतिर्न्यासः समीचीनो हि मध्यमे ॥ ८७ ॥
मेघदर्बारयोर्योगाद्रागोऽयं स्यात्समुत्थितः ।
वदंति पंडिताः केचिल्लक्ष्यलक्षणकोविदाः ॥ ८८ ॥
सारंगस्य प्रकारेषु नित्यं गांधारवर्जनम् ।
न तत्कर्णाटभेदेषु ततस्तद्भित् परिस्फुटा ॥ ८९ ॥

सुघरायी ।

हरप्रियाख्यमेलाच्च सुघरायी समुत्थिता ।
आरोहे धैवतोनासौ द्वितीयप्रहरोचिता ॥ ९० ॥
पंचमः संमतो वादी संवादी षड्जनामकः ।
कर्णाटस्यैव भेदोऽयं सारंगांगविभूषितः ॥ ९१ ॥
अडाना कानडा चैव वृंदावनी तथैव च ।
मिलन्त्यत्र यथान्यायमिति केचिद्वदन्ति ते ॥ ९२ ॥
सहाना रात्रिगेयोक्ता गेयैषा नित्यशो दिवा ।
नायकी कानडा रात्रौ दिनगेया तथा सुहा ॥ ९३ ॥
सुहा धैवतहीना स्यादत्र धो नानुलोमके ।
वृंदावन्यधगा नित्यं निषादद्वयमंडिता ॥ ९४ ॥

देशाखः ।

हरप्रियाह्वये मेले जातो रागः सुनामकः ।
देशाख इति विख्यातो लक्ष्येऽखिलगुणिप्रियः ॥ ९५ ॥
पंचमः संमतो वादी संवादी षड्जनामकः ।
केश्चित्संवादिनौ प्रोक्तौ तत्र षड्जकमध्यमौ ॥ ९६ ॥

आरोहे चावरोहेऽपि धैवतो वर्जितस्वरः ।
दौर्बल्यं धगयोरत्र वर्णयन्ति पुनः क्वचित् ॥ ९७ ॥

गांधारांदोलनं न्यासो मध्यमे रुचिरो भवेत् ।
गपयोः संगती रम्या रागरूपं समादिशेत् ॥ ९८ ॥

देवसाग इति ख्यातो रागोऽयं लक्ष्यवर्त्मनि ।
गानं तस्य समादिष्टं द्वितीयप्रहरे दिने ॥ ९९ ॥

गह्वयो निद्वयश्चापि रिहीनः परिकीर्तितः ।
केषुचिच्छास्त्रग्रंथेषु न तल्लक्ष्येऽत्र लभ्यते ॥ १०० ॥

## नायकीकानडा ।

काफीमेलसमुत्पन्नः कर्णाटो नायकी मतः ।
आरोहे चावरोहेऽपि धैवतो वर्जितस्वरः ॥ १ ॥

मध्यमो निश्चितो वादी संवादी षड्ज ईरितः ।
गानं तस्य समीचीनं रात्र्यां तृतीययामके ॥ २ ॥

पूर्वांगे स्यात्सुहायोगः सारंगस्योत्तरांगके ।
रिपयोः संगतिश्चित्रा रागभेदं प्रदर्शयेत् ॥ ३ ॥

देशाख्यो नायकी सूहा तथा सुघ्राइसंज्ञिता ।
सारंगांगा मता लक्ष्ये धगाल्पा गीतवेदिभिः ४ ॥

धकोमलं सुसंपूर्णं वक्ररूपं तथैव च ।
वर्णयन्ति पुनः केचिदेनं लक्ष्येऽत्र नैव तत् ॥ ५ ॥

मल्लारकानडायोगाद्रूपमेतद्विनिर्मितम् ।
इत्यनूपविलासाख्ये ग्रंथे भावेन कीर्तितम् ॥ ६ ॥

कानडा कौशिकश्चापि वागीश्वरी तथैव च ।
मिलन्त्यत्रेति केचिद्वै संगिरंति मनीषिणः ॥ ७ ॥

सहाना ।

हरप्रियाह्वये मेले सहानाजनुरीरिता ।
रूपमाधुनिकं चैतत्संपूर्णं गुणिसंमतम् ॥ ८ ॥
पंचमः संमतो वादी षड्जः स्यान्मंत्रितुल्यकः ।
गानमभिमतं चास्या राज्यां तृतीययामके ॥ ९ ॥
प्रयोगात्तीव्रधस्यात्र ह्यडाणाभित्परिस्फुटा ।
धगसंयोगतोऽप्यत्र नैव सारंगसंभवः ॥ १० ॥
गपसंगत्यभावे स्याद्देवसागनिवारणम् ।
प्रतिरूपं दिवा चास्याः सुघरायी मता जने ॥ ११ ॥
कानडायाः प्रभेदोऽयमंगीकृतो यतो बुधैः ।
प्रयोगो धगयोरत्र भवेद्रक्तिप्रवर्धकः ॥ १२ ॥
निधनिपधमपैः स्याद्रागरूपप्रदर्शनम् ।
धैवतस्य परित्यागात्सुहा स्यात्सुपरिस्फुटा ॥ १३ ॥
कानडाऽथ फिरोदस्तो मिलतोऽत्र यथायथम् ।
इत्यनूपविलासाख्ये ग्रंथे भावेन कीर्तितम् ॥ १४ ॥
मल्लारकानडायोगादडाणायोगतोऽपि च ।
रागिणीयं समुद्भूतेत्याहुः केचिद्विशारदाः ॥ १५ ॥

मध्यमादिः ।

काफीमेलसमुत्पन्ना मध्यमादिः प्रकीर्तिता ।
आरोहे चावरोहे च गांधारधैवतोज्झिता ॥ १६ ॥
ऋषभः संमतो वादी संवादी पंचमो भवेत् ।
गानं चाभिमतं तस्या मध्याह्ने सूरिरक्तिदम् ॥ १७ ॥
स्वीकृतो ह्युपभेदोऽयं सारंगस्याऽत्र लक्ष्यके ।
अभावो धगयोश्चाथ संमतो लक्ष्यवेदिनाम् ॥ १८ ॥

पूर्वांगे परिसंगत्या निपयोरुत्तरांगके ।
रागोऽयं निश्चितः प्रायो भवेदिति सतां मतम् ॥ १९ ॥
प्रकारा बहवो लक्ष्ये सारंगस्य समीरिताः ।
तेषु ये सुप्रसिद्धाः स्युस्ते मयाऽत्र प्रकीर्तिताः ॥ २० ॥

टिप्पनी ।

मध्याह्ने मध्यरात्रे च सारंगांगं सुविश्रुतम् ।
तत्कालगेयरागेषु महद्वैचित्र्यकारणम् ॥ २१ ॥
सुहासुघ्राइकाद्यास्ते रागा दिने तदंगजाः ।
नायकयडाणकाद्यास्ते रात्रिगेयास्तथैव च ॥ २२ ॥
वृंदावनी मध्यमादिः सारंगः शुद्धपूर्वकः ।
सामंतो बडहंसश्च मीयांसारंगनामकः ॥
लंकादहनसारंग एते भेदा बहुश्रुताः ॥ २३ ॥

वृंदावनीसारंगः

काफीमेलसमुत्पन्ना वृंदावनी मता जने ।
आरोहे चावरोहेऽपि धगोना बहुसंमता ॥ २४ ॥
ऋषभः कीर्तितो वादी पंचमो मंत्रितुल्यकः ।
गानं तस्याः समादिष्टं मध्याह्ने लक्ष्यवर्त्मनि ॥ २५ ॥
निषादौ द्वौ मतावत्र रागनामप्रसूचकौ ।
मध्यमादिः सदा प्रोक्ता निकोमलपरिष्कृता ॥ २६ ॥
आदिशन्ति पुनः केचिद्दीषत्स्पर्शं विलोमके ।
धैवतस्य यतस्तेन मध्यमाद्याः स्फुटा भिदा ॥ २७ ॥
केचिद्वृंदावनीरागे निषादं तीव्रसंज्ञकम् ।
प्राहुर्येन भवेदस्य मध्यमादिभिदा स्फुटा ॥ २८ ॥
मृदुनिमंडिता प्रोक्ता हृदयेशेन धीमता ।
वृंदावनी पगत्यक्तौडुवा विज्ञसुखावहा ॥ २९ ॥

रिमयोः संगतिश्चित्रा रागेऽस्मिन् भूरिरक्तिदा।
सैव स्याद्रिपयोस्तत्र मध्यमाद्यां विदां मते ॥ ३० ॥
धगयोर्गोपनं लक्ष्ये मुख्यं सारंगलक्षणम् ।
यथायोग्यप्रमाणेन प्रायः सर्वत्र लक्षितम् ॥ ३१ ॥

शुद्धसारंगः ।

हरप्रियाह्वये मेले शुद्धसारंगनामकः ।
आरोहे चावरोहेऽपि गांधारो वर्जितस्वरः ॥ ३२ ॥
ऋषभोऽत्र मतो वादी संवादी पंचमो भवेत् ।
द्वितीयप्रहरे गानं सर्वरक्तिप्रदं दिने ॥ ३३ ॥
धैवतस्य प्रयोगोऽत्र व्यक्तो यत्परिदृश्यते ।
मध्यमादेः प्रभिन्नत्वमवश्यं प्रस्फुटं भवेत् ॥ ३४ ॥
मध्यमौ द्वौ निषादौ द्वौ विलोमे धैवतो मनाक् ।
एभिः स्याच्छुद्धसारंगः स्वतंत्रो लक्ष्यवर्त्मनि ॥ ३५ ॥
तीव्रमध्यमहीनत्वं वृंदावन्यां सुसंमतम् ॥
शुद्धमध्यमरिक्तत्वं नूरसारंगलक्षणम् ॥ ३६ ॥
केचित्समादिशन्त्यत्र धैवतस्यैव लंघनम् ।
लक्ष्ये न तत्तथाप्यत्र बुधः कुर्याद्यथोचितम् ॥ ३७ ॥
हृदयकौतुके ग्रंथे तथैव हृत्प्रकाशके ।
द्विमध्यमो धगोनश्च सारंगः परिकीर्तितः ॥ ३८ ॥
संगीतपारिजाताख्ये ग्रंथेऽहोबलसूरिणा ।
सारंगो वर्णितः स्पष्टं निमद्वंद्वो धगोज्झितः ॥ ३९ ॥

मीयांसारंगः ।

हरप्रियाह्वये मेले मीयांसारंग ईरितः ।
आरोहे चावरोहेऽपि गांधारो वर्जितस्वरः ॥ ४० ॥

ऋषभः संमतो वादी संवादी पंचमो मतः ।
गानं चास्य समीचीनं द्वितीयप्रहरे दिने ॥ ४१ ॥

यतः सारंगभेदोऽयं न्यंशत्वं युक्तमेव तत् ।
मंद्रमध्यस्वरैर्गीतो भूरिरक्तिप्रदो भवेत् ॥ ४२ ॥

रिपयो रिमयोश्चाथ संगत्या नित्यशो जने ॥
सारंगांगं भवेत्स्पष्टमित्याहुर्लक्ष्यवेदिनः ॥ ४३ ॥

संगतिर्निधयोरत्र रागभेदं प्रदर्शयेत् ।
मीयांमल्लारिकाच्छाया तत्रैव प्रकटीभवेत् ॥ ४४ ॥

सनिधनिधसैः प्रायो रागस्य मंडनं भवेत् ।
गांधाराभावतो नित्यं मल्लारांगं निवारयेत् ॥ ४५ ॥

मृदुनिषादसंयुक्ता मध्यमादिर्भजेद्विदाम् ॥
वृंदावनी धगोनाऽसौ निषादद्वयसंयुता ॥ ४६ ॥

द्विमध्यमप्रभिन्नः स्यात्सारंगः शुद्धपूर्वकः ।
एकेन तीव्रमेन स्यान्नूरसारंगसंज्ञितः ॥ ४७ ॥

सामंतसारंगः ।

काफीमेलसमुत्पन्नः सामंतो गुणिसंमतः ।
आरोहे चावरोहेऽपि गांधारो वर्जितस्वरः ॥ ४८ ॥

सारंगस्य प्रभेदोऽयं रिपसंवादमंडितः ।
गानं तस्य समीचीनं द्वितीयप्रहरे दिने ॥ ४९ ॥

धैवतस्यात्र संस्पर्शो विलोमेऽनुमतो मनाक् ।
देससारंगयोगेन रूपमेतत्समुद्भवेत् ॥ ५० ॥

आरोहे चावरोहेऽपि धगहीनः प्रकीर्तितः ।
हृत्प्रकाशाह्वये ग्रंथे हृदयेशेन धीमता ॥ ५१ ॥

गांधारद्वयसंयुक्तो न्यासोद्ग्राहांशषड्जकः ।
सामंतः कीर्तितो ग्रंथे संगीतपारिजातके ॥ ५२ ॥
कर्णाटाख्यसुमेले च सामंतः परिकीर्तितः ।
मंजर्यां पुंडरीकेण काकल्यंतरभूषितः ॥ ५३ ॥

बडहंससारंगः ।

काफीमेलसमुत्पन्नो बडहंसो बुधैर्मतः ।
कैश्चिदन्यैर्वर्णितोऽसौ शंकराभरणस्वरैः ॥ ५४ ॥
ऋषभः संमतो वादी संवादी पंचमो मतः ।
गानमस्य समीचीनं द्वितीयप्रहरे दिने ॥ ५५ ॥
सारंगस्य प्रभेदोऽयं संमतः सर्वतोऽधुना ।
ततो गांधारलोपोऽत्र समादृतो विचक्षणैः ॥ ५६ ॥
बडहंसे मतं प्रायो धगस्वरपलोपनम् ।
मुक्तत्वं मध्यमेऽभीष्टमपन्यासस्तु निस्वरे ॥ ५७ ॥
सारंगनामके मेले रागोऽयं कीर्तितः स्फुटम् ।
लोचनेन तथैवाऽपि हृदयेशेन धीमता ॥ ५८ ॥
तीव्रमध्यमयोगोऽत्र वर्णितो हृत्प्रकाशके ।
यतो लक्ष्यविरोध्येतन्नतत्संमानमर्हयेत् ॥ ५९ ॥
प्रयोगस्तीव्रधस्याऽत्र विलोमे दृश्यते क्वचित् ।
लक्ष्यमार्गमनुलंघ्य कुर्यात्तत्र प्रवर्तनम् ॥ ६० ॥

पटमंजरी ।

हरप्रियाह्वये मेले मंजरी पटपूर्विका ।
रागिणी श्रूयते लक्ष्ये संपूर्णा बहुसंमता ॥ ६१ ॥
आरोहे धगदौर्बल्यात्सारंगांगं प्रसूचयेत् ।
सारंगे लंघनं प्रोक्तं समूलं स्वरयोस्तयोः ॥ ६२ ॥

वादित्वं षड्जके निष्ठं संवादित्वं तु पंचमे ।
सारंगानन्तरं गानं भवेदस्याः सुरक्तिदम् ॥ ६३ ॥

सरिमपस्वरैर्व्यक्तं सारंगांगं प्रदर्शयेत् ।
धगयोः सुप्रयोगात्तद्गायनः परिमार्जयेत् ॥ ६४ ॥

संगतिर्धगयोरत्र भवेद्रक्तिप्रवर्धनी ।
रिगमगस्वरैश्चेह देसीरूपं भिदां भजेत् ॥ ६५ ॥

दुर्लभं रूपमेतद्यद्वश्यं संभवेत्ततः ।
लक्ष्याध्वनि मतानैक्यं बुधः कुर्यात्स्वनिर्णयम् ॥ ६६ ॥

मते केषांचिदप्यत्र द्विगांधारप्रयोजनम् ।
पंचमस्यापि वादित्वं न तन्मे भाति संगतम् ॥ ६७ ॥

मेले शुद्धस्वराणां तां केचिदन्ये विदो विदुः ।
न तद्विसंगतं भाति मतं लक्ष्यानुसारतः ॥ ६८ ॥

शुद्धस्वरयुतं रूपं रात्रिगेयं भवेत्प्रियम् ।
मया प्रपंचितं त्वत्र तृतीयप्रहरे दिने ॥ ६९ ॥

## शुद्धमल्लारः ।

काफीमेलसमुत्पन्नः शुद्धमल्लारनामकः ।
आरोहेऽप्यवरोहे च गनिहीनौडुवो मतः ॥ ७० ॥

मध्यमः संमतो वादी संवादी षड्ज ईरितः ।
गानमस्य समीचीनं वर्षाकाले मतं बुधैः ॥ ७१ ॥

मुक्तत्वान्मध्यमस्यात्र तथैव पधसैः स्वरैः ।
रागोऽयं लक्ष्यते स्पष्टमिति सर्वत्र संमतम् ॥ ७२ ।

रागविबोधके ग्रंथे सोमनाथेन धीमता ।
मल्लारिमलने प्रोक्तो रागोऽयं गनिवर्जितः ॥ ७३ ।

मेघरागस्य संस्थाने प्रोक्तो हृदयकौतुके ।
निर्द्वंद्वतीव्रगोपेतो न तल्लक्ष्येऽत्र दृश्यते ॥ ७४ ॥
संगत्या धमयोस्तत्र दुर्गा स्यात्सुपरिस्फुटा ।
जलधारो भवेद्भिन्नः केदारांगेन प्रस्फुटम् ॥ ७५ ॥

### गौंडमल्लारः ।

हरप्रियाह्वये मेले गौंडमल्लार ईरितः ।
मतान्तरे पुनश्चासौ शंकराभरणे स्मृतः ॥ ७६ ॥
संपूर्णो मध्यमांशोऽपि गीयते लक्ष्यवर्त्मनि ।
गानं तस्य समीचीनं वर्षाकाले सुनिश्चितम् ॥ ७७ ॥
रिगरिमगरिसैः स्याद्गौडांगं लोकविश्रुतम् ।
मपधसैस्तथैवः स्यान्मल्लारांगं परिस्फुटम् ॥ ७८ ॥
परित्यागे तु निगयोः शुद्धमल्लारको भवेत् ।
मध्यमादृपमे पातो विशिष्टां रक्तिमावहेत् ॥ ७९ ॥
रिपयोः संगतिः प्रायो रागेऽस्मिन् गुणिसंमता ।
आरोहे दुर्बलो निः स्यादिति मर्मज्ञसंमतम् ॥ ८० ॥
एवा गृह्णाति गांधारं कोमलं निमृदुं तथा ।
सधनिपमपगमारिसैर्भवेत्सुमंडनम् ॥ ८१ ॥

### मीयांमल्लारः ।

हरप्रियाभिधे मेले जायते विबुधप्रियः ।
मीयांमल्लाररागोऽसौ वर्षासु सुखदायकः ॥ ८२ ॥
संवादिनौ सपौ प्रोक्तौ गांधारे दोलनं भवेत् ।
निधयो रिपयोश्चैव संगती रागवाचिके ॥ ८३ ॥
मंद्रस्थानगतं गानं नित्यं स्याद् हृदयंगमम् ।
विलंबितलयालापः कस्य नो हर्षयेन्मनः ॥ ८४ ॥

निपादद्वयसंयोगो दृश्यते लक्ष्यके क्वचित् ।
प्रच्छन्नधैवतः कुर्याद्धहारपरिमार्जनम् ॥ ८५ ॥

गांधारान्दोलने स्पष्टं कानडांगं परिस्फुटम् ॥
मध्यमादृषभे पातो मल्लारांगं सुनिर्णयेत् ॥ ८६ ॥

मल्लारकानडायोगाद्रागोऽयं परिकल्पितः ।
तानसेनकृतिश्चेयमिति लोके सुसंमतम् ॥ ८७ ॥

मपनिधनिसैरस्य विशिष्टांगं भवेत्स्फुटम् ।
मपधसधपैर्लोके गौडांगं विशदं भवेत् ॥ ८८ ॥

## सूरमल्लारः ।

काफीमेलसमुत्पन्नः सूरमल्लार ईरितः ।
निर्मितः सूरदासेनेत्याहुर्लक्ष्ये विचक्षणाः ॥ ८९ ॥

आरोहे चावरोहेऽपि धगयोर्लोपनं मतम् ।
समयोरेव संवादो व्यस्तत्वं मध्यमे शुभम् ॥ ९० ॥

धैर्वल्याद्रुगयोरत्र सारंगांगस्य संभवः ।
अतो मनाङ्मतः स्पर्शो धैवतस्य न बाधकः ॥ ९१ ॥

मध्यमादृषभे पातः सोरटीं दर्शयेद्यदि ।
निपयो रिपयोश्चात्र संगत्या तां निवारयेत् ॥ ९२ ॥

निमपनिधपैश्चापि रागांगं विशदीभवेत् ।
मध्यमान्तस्वरस्थायो मल्लारांगं प्रसूचयेत् ॥ ९३ ॥

केचिद्गांधारकं प्राहुः कोमलमत्ररागके ।
न तद्ग्राह्यमित्यूचुर्लक्ष्यलक्षणकोविदाः ॥ ९४ ॥

मल्लारो मध्यमाविश्च रागेऽस्मिन्मिलतो मृशम् ।
इति लक्ष्यविदां तावन्मतं भाति सुसंगतम् ॥ ९५ ॥

शुद्धपूर्वकमल्लारे गनिवर्ज्यं समीरितम् ।
धगग्राही पुनगाडो नित्यं लक्ष्ये भिदां भजेत् ॥ ९६ ॥
कानडागौंडसंयोगान्मियांमल्लारको भवेत् ।
मध्यमाविस्तथा गौंडो मिलतः सूरनामके ॥ ९७ ॥
गंभीरप्रकृतिर्मेघो विलंबितलयोद्भूतः ।
उत्तालस्वरसंगीतो वर्षासु जनयेत्सुखम् ॥ ९८ ॥

## रामदासीमल्लारः ।

हरप्रियाह्वये मेले जातो रागः सुनामकः ।
रामदासीति विख्यातः संपूर्णो लोकविश्रुतः ॥ ९९ ॥
मध्यमः संमतो वादी संवादी षड्ज ईरितः ।
गानं तस्य समीचीनं वर्षाकाले सुनिश्चितम् ॥ १०० ॥
गांधारस्तीव्र आरोहेऽवरोहे कोमलाभिधः ।
अप्रसिद्धमिदं रूपं नूनं रक्तिप्रदायकम् ॥ १ ॥
द्विगांधारप्रयोगात्स्यादन्यमल्लारभित्स्फुटा ।
रिमयोर्निपयोश्चापि संगतिर्भूरिरक्तिदा ॥ २ ॥
सहानागौडसंयोगाद्रूपमेतद्विनिर्मितम् ।
धीमता रामदासेनेत्याहुः केचिद्विपश्चितः ॥ ३ ॥
मतान्तरे तु मृदुग एक एवाऽत्र संमतः ।
लक्ष्यमार्गमनुलंघ्य कुर्यात्तत्र स्वनिर्णयम् ॥ ४ ॥

## नटमल्लारः ।

काफीमेलसमुत्पन्नो नटमल्लार ईरितः ।
आरोहे चावरोहेऽपि संपूर्णस्तद्विदां मते ॥ ५ ॥
मध्यमः कीर्तितो वादी संवादी षड्ज ईरितः ।
गानं चास्य समीचीनं वर्षाकाले सुनिश्चितम् ॥ ६ ॥

नटमल्लारसंयोगाद्रागोऽयं निर्मितो बुधैः ।
पूर्वांगे स्यान्नटच्छाया मल्लारस्योत्तरांगके ॥ ७ ॥
रिमयो रिपयोश्चात्र संगतिः सुखदायिनी ।
ईषन्निकोमलस्पर्शः प्रतिलोमेऽत्र क्षम्यते ॥ ८ ॥
मतान्तरे द्विगांधारो गीयते लक्ष्यवर्त्मनि ।
नित्यं लक्ष्यमनुल्लंघ्य कुर्यात्तत्र स्ववर्तनम् ॥ ९ ॥

टिप्पनी

काफी रागः सदा पूर्णः पीलुर्द्वांदशसुस्वरा ।
आरोहे गनिहीनासौ सिंदूरा शास्त्रसंमता ॥ १० ॥
धन्यासी रिधरिक्तोक्ता रोहणे पंचमांशिका ।
तथैव संमता भीमपलासी मध्यमांशिका ॥ ११ ॥
आरोहे चावरोहेऽपि धानी स्याद्रिधवर्जिता ।
पंचमांशा द्विगांधारा विचित्रा हंसकंकणी ॥ १२ ॥
गद्वया मध्यमांशाच लोके प्रदीपकी स्मृता ।
आरोहेऽरिर्विहाराख्योऽड्डाणांगेन परिष्कृतः ॥ १३ ॥
वागीश्वरी त्वपारोहे संपूर्णा कैश्चिदीरिता ।
धवर्जिता मता सूहा मध्यमांशाच सुत्कमा ॥ १४ ॥
प्रतिलोमे धसंस्पर्शा पांशा सुघ्राइका जने ।
नायकी धैवतोना स्याद्रिपसंगतिशोभना ॥ १५ ॥
सहाना तु सुसंपूर्णा निपसंगमनोहरा ।
गांधारांदोलिता कौंसी वागीश्वर्यंगमंडिता ॥ १६ ॥
धरिक्तो देवशाखः स्याद्रुपसंगविचित्रकः ।
मद्वंद्वः शुद्धसारंगो मध्यमादिर्धगोज्झितः ॥ १७ ॥
प्रतिलोमे धसंस्पर्शा वृन्दावनी मता जने ।
मुक्तमो बडहंसःस्याद्धस्पर्शो गीयते क्वचित् ॥ १८ ॥

गवर्जितो मतो लक्ष्ये सामंतो देसकांगकः ।
मल्लारांगो भवेन्मीयांसारंगो निधशोभनः ॥ १९ ॥
मृदुगः श्रूयते लोके लंकादहननामकः ।
ईषन्मृदुगसंस्पर्शा संपूर्णा पटमंजरी ॥ २० ॥
शुद्धमल्लारकः प्रोक्तोऽगनिर्गानविशारदैः ।
तीव्रगांधारसंयुक्तो गौंडमल्लारको जने ॥ २१ ॥
मंडितः कानडांगेन मीयांमल्लारसंज्ञितः ।
धगोनः सूरमल्लारो धैपत्स्पर्शोऽथवा क्वचित् ॥ २२ ॥
मेघमल्लारनामासौ नित्यं लक्ष्ये धगोज्झितः ।
गद्वंद्वं संमतं तत्र रामदासिमलारके ॥ २३ ॥
गद्वयं धद्वयं चापि मीरामल्लारनामके ।
छायानट्टाश्रयः प्रोक्तो नटमल्लारसंज्ञितः ॥ २४ ॥
चंचलाद्यससाख्योऽपि चर्ज्वाह्वयोऽथ धूलिया ।
अप्रसिद्धा मता एते नित्यं स्युर्वादमूलकाः ॥ २५ ॥

आसावरीमेल ।

आसावरी ।

ग्रंथेषु भैरवीमेलो यः पुराणैः प्रकीर्तितः ।
स एवासावरीसंज्ञो लक्ष्ये विद्भिः समाहृतः ॥ २६ ॥
मेलादस्मात्समुत्पन्न आसावरीति नामकः ।
रागो गुणिप्रियश्चाथ प्रारोहे गनिवर्जितः ॥ २७ ॥
धैवतोऽत्र मतो वादी संवादी गस्वरो भवेत् ।
गानं चास्य समादिष्टं द्वितीयप्रहरे दिने ॥ २८ ॥
मध्यमेन ग्रहोऽभीष्टः पंचमे न्यसनं शुभम् ।
उत्तरांगप्रधानत्वात्प्रतिलोमे परिस्फुटः ॥ २९ ॥
संगतिः पगयोश्चित्राऽवरोह चाल्पपंचमः ।
रिमपनिधपस्वरै रागोऽयं स्पष्टतां व्रजेत् ॥ ३० ॥

रागतरंगिणीग्रंथ आसावरी प्रकीर्तिता ।
लोचनाख्येन विदुषा गौरीमेलसमाश्रिता ॥ ३१ ॥
तथैव कौतुकाख्येऽसौ हृदयेशेन लक्षिता ।
मायामालवके मेले सोमनाथेन भाषिता ॥ ३२ ॥
गौरीमेलसमुत्पन्ना पुंडरीकेण वर्णिता ।
रागलक्षणके ग्रंथे तोडीमेले निरूपिता ॥ ३३ ॥

जौनपुरी ।

आसावरीसुमेलोत्था जौनपुरी गुणिप्रिया ।
सुलतानहुसेनेन निर्मितेयमिति प्रथा ॥ ३४ ॥
धैवतः संमतो वादी कैश्चित्पंचम ईरितः ।
गानमस्याः समीचीनं द्वितीयप्रहरे दिने ॥ ३५ ॥
प्रारोहे स्याद्गवर्ज्यत्वमवरोहे समग्रकम् ।
गरिमपस्वरैर्नित्यं स्वस्वरूपं प्रकाशयेत् ॥ ३६ ॥
आसावरीसमीपत्वात्तदंग प्रस्फुटं क्वचित् ।
रोहणे गनिवर्ज्यत्वादासावरी भिदां भजेत् ॥ ३७ ॥
आधुनिकमिदं रूपं यवनैः संप्रसाधितम् ।
इति सुसंमतं लक्ष्ये नूनं रक्तिप्रदायकम् ॥ ३८ ॥
तीव्रऋतोडिका ख्याता प्राचीनोक्ताऽत्र लक्ष्यके ।
जौनपुरी कदाचित्स्यादिति कुत्रापि संमतम् ॥ ३९ ॥
आसावरीमध्यमादियोगोऽत्र सूचितः क्वचित् ।
गांधान्यासावरीयोगः कैश्चिदन्यैः प्रसूचितः ॥ ४० ॥

गांधारी ।

आसावरीसुमेले च गांधारी कीर्तिता बुधैः ।
आरोहणे गरिक्तासौ संपूर्णा चावरोहणे ॥ ४१ ॥
धैवतोऽत्र मतो वादी गांधारो मंत्रितुल्यकः ।
गानं तस्याः समादिष्टं द्वितीयप्रहरे दिने ॥ ४२ ॥

रूपभद्वयसंपन्ना चासावर्यंगधारिणी ।
गरिमपस्वरैर्नित्यं स्वातंत्र्यं दर्शयेज्जने ॥ ४३ ॥
रितीवा जौनपुर्याख्या निगोनासावरीरिता ।
प्रारोहे देवगांधारो द्विगो रिधोज्झितोऽथवा ॥ ४४ ॥
हृदयकौतुके ग्रंथे हृदयेशेन सूरिणा ।
देवगांधारकः प्रोक्तो गौरीमेले निगोज्झितः ॥ ४५ ॥
तथैव सोमनाथेन वर्णितोऽसौ स्वनिर्मितो ।
सांशो भैरवमेलोत्थोऽप्यहोबलेन वर्णितः ॥ ४६ ॥
रागचंद्रोदये ग्रंथे पुंडरीकेण धीमता ।
देवगांधारकः प्रोक्तो मेले मालवगौळके ॥ ४७ ॥
तेनैव रागमालाख्यग्रंथेऽसौ परिकीर्तितः ।
शंकराभरणे मेले इति सर्वत्र विश्रुतम् ॥ ४८ ॥
चतुर्दंडिप्रकाशिकाग्रंथे वेंकटसूरिणा ।
देवगांधाररागोऽयं प्रोक्तः काफ्याह्वमेलजः ॥ ४९ ॥
रागलक्षणके ग्रंथे देवगांधार ईरितः ।
नटभैरविमेलोत्थः प्रारोहे रिधवर्जितः ॥ ५० ॥

## देशी ।

नटभैरविकामेले प्रोक्ता देशी गुणिप्रिया ।
प्रारोहे धगवर्ज्यत्वं प्रतिलोमे समग्रकम ॥ ५१ ॥
पंचमः कीर्तितो वादी मंत्रितुल्यस्तु रिस्वरः ।
गानं चास्याः समाख्यातं द्वितीयप्रहरे दिने ॥ ५२ ॥
योजयंति पुनः केचिदत्र तीवाख्यधैवतम् ।
अन्येऽपि धैवतद्वंद्वं बुधः कुर्याद्यथोचितम् ॥ ५३ ॥
पूर्वांगे विलसेदत्र सारंगांग विशेषतः ।
उत्तरांगे लसेदासावर्यंगं लक्ष्यविन्मते ॥ ५४ ॥

देशीतोडी मता मेले गौर्याख्ये लोचनेन वै ।
तथैव कौतुके प्रोक्तं हृदयेशेन सूरिणा ॥ ५५ ॥
शुद्धरामक्रियामेले सोमनाथेन वर्णिता ।
हरप्रियाह्वये मेले प्रोक्ता व्यंकटधीमता ॥ ५६ ॥
रागलक्षणके ग्रंथे नटभैरविमेलने ।
प्रारोहे गस्वरत्यक्ता कीर्तिता चांध्रसंमता ॥ ५७ ॥

खटरागः ।

आसावरीसुमेलाच्च खटरागः समुत्थितः ।
आरोहे चावरोहेऽपि संपूर्णस्तद्विदां मते ॥ ५८ ॥
धैवतः संमतो वादी गांधारो मंत्रिसंनिभः ।
गानमस्य समीचीनं द्वितीयप्रहरेऽहनि ॥ ५९ ॥
वर्णयंति पुनः केचिदेनं पंचमवादिनम् ।
गग्रहं पंचमन्यासं बुधः कुर्यात्स्वनिर्णयम् ॥ ६० ॥
प्रकृतिचपलश्चित्रो बहुभिर्गमकैर्युतः ।
उत्तरांगप्रधानोऽयं संगवे भूरिरक्तिदः ॥ ६१ ॥
एके भैरवमेलेऽमुं वर्णयंति विपश्चितः ।
मिश्रमेलसमुत्पन्नं कथयंति पुनः परे ॥ ६२ ॥
गद्वयो रिद्वयश्चाथ धैवतद्वयसंयुतः ।
खटरागः श्रुतो लोके धगान्दोलनभूषितः ॥ ६३ ॥
रागतरंगिणीग्रंथे तथा हृदयकौतुके ।
कीर्तितः खटरागोऽयं गौरीमेलसमाश्रयः ॥ ६४ ॥
वराटी गुर्जरी गौरी श्यामा चासावरीति च ।
गांधारीसंयुता एताः स्युः षड्राग इतीरितम् ॥ ६५ ॥

दरबारीकानडा ।

आसावरीसुमेलाच्च जातो रागः सुनामकः ।
कर्णाटाह्वयको लक्ष्ये प्रौढालापार्ह उत्तमः ॥ ६६ ॥

ऋषभः संमतो वादी संवादी पंचमो मतः ।
गानं सुनिश्चितं चास्य तृतीयप्रहरे निशि ॥ ६७ ॥
अपभ्रंशस्तु कर्णाटशब्दस्य कानडा जने ।
दरबारीति यवनैर्गीतत्वाद्राजसंसदि ॥ ६८ ॥
सदान्दोलितगांधारो विलंबितलयान्वितः ।
मन्द्रमध्यप्रचारोऽयं निपसंगमनोहरः ॥ ६९ ॥
कर्णाटस्य प्रकारास्ते बहवो लोकविश्रुताः ।
प्रारोहे दुर्बलो गःस्याद्वरोहे न धैवतः ॥ ७० ॥
सरिमपधनिसैः स्याद्रोहणमतिरक्तिदम् ।
सधनिपमपगरिसैरवरोहणं मतम् ॥ ७१ ॥

अडाणा ।

आसावरीसुमेलाच्च जातोऽड्डाणो गुणिप्रियः ।
प्रारोहे हीनगांधारो धवक्रो विलोमके ॥ ७२ ॥
षड्जवादी पसंवादी गीयते प्रायशो जने ।
गानं चास्य समीचीनं तृतीयप्रहरे निशि ॥ ७३ ॥
दौर्बल्याद्गगयोः किंचित्सारंगांगं भवेत्स्फुटम् ।
विलोमे पगसंगत्या भवेत्तद्पवारणम् ॥ ७४ ॥
कर्णाटके यथा प्रोक्ता मंद्रमध्यविचित्रता ।
तारमध्यगता चात्र प्रोच्यतेऽसौ विचक्षणैः ॥ ७५ ॥
कर्णाटमेलने प्रोक्तो रागोऽयं लोचनादिकैः ।
तीव्रधैवतगांधारो न तल्लक्ष्येऽद्य संमतम् ॥ ७६ ॥
भग्रहः तारषड्जांशः प्रतिलोममनोहरः ।
तृतीययामके रात्र्यां नूनं स्यादतिरक्तिदः ॥ ७७ ॥

कौशिकः ।

आसावरीसुमेलोत्था कौशिकीकानडा मता ।
प्रारोह रिपहीनाऽसौ संपूर्णा चावरोहणे ॥ ७८ ॥

मध्यमः संमतो वादी साहचर्ये तु षड्जकः ।
गानं समीरितं तस्या निशीथे भूरिरक्तिदम् ॥ ७९ ॥
कानडा मालकोशश्च मिलतोऽत्र यथायथम् ।
काफीमेलगता कौंसी पूर्वमेव मयोदिता ॥ ८० ॥
मधनिसानिधमैः स्यान्मालकोशांगदर्शनम् ।
पगमगरिसैः कुर्याद् बुधस्तदंगवारणम् ॥ ८१ ॥
अप्रसिद्धमिदं रूपं गायनोत्तमनिर्मितम् ।
सम्प्रद्भूतं यथान्यायमवश्यं रक्तिदं भवेत् ॥ ८२ ॥

सिंधुभैरवी ।

आसावरीसुमेलाच्च भैरवी सिंधुपूर्विका ।
आरोहे चावरोहेऽपि संपूर्णा धैवतांशिका ॥ ८३ ॥
वर्णयन्ति पुनः केचिदेनां मध्यमवादिनीम् ।
गानं सुनिश्चितमस्या द्वितीयप्रहरे दिने ॥ ८४ ॥
ऋषभद्वयप्रयोगोऽत्र दृश्यते लक्ष्यके क्वचित् ।
परिवर्त्य पुनः षड्जं गायन्ति गायनाः क्वचित् ॥ ८५ ॥
आधुनिकं स्वरूपं स्यादेतत्प्राहुर्विचक्षणाः ।
मंद्रमध्यप्रचारेण वैचित्र्यं तनुते ध्रुवम् ॥ ८६ ॥

झीलफः ।

आसावरीमेलजन्यो झीलफः श्रूयते जने ।
राग आधुनिको ह्येष संपूर्णो धैवतांशकः ॥ ८७ ॥
जौनपुर्यपि सद्रागो ह्यत्रावयवौ मतौ ।
प्रातःकालप्रगेयत्वादुत्तरांगं परिस्फुटम् ॥ ८८ ॥
भैरवमेलनेऽप्याहुः केचिदेनं विचक्षणाः ।
धवादिनं रिनित्यक्तं बुधः कुर्याद्यथोचितम् ॥ ८९ ॥

आसावर्यां गनी न स्तः प्रारोह ऋषभद्वया ।
गांधारी कीर्तिताऽऽरोहे जौनपुरींगवर्जिता ॥ ९० ॥
झीलफे धैवतद्वंद्वं षड्जागेऽपि तथैवच ।
प्रारोहे न धगौ देश्यां पूर्णां सिंध्याख्यभैरवी ॥ ९१ ॥
मंद्रमध्यसुसंचारा दरबारी मता जने ।
मध्यतारसुसंचारोऽड्डाणः सर्वत्र विश्रुतः ॥ ९२ ॥
कौंसी सुसंमता लक्ष्ये मालकंसांगधारिणी ।
एवमासावरीमेलजाता रागा दशेरिताः ॥ ९३ ॥

भैरवीमेले ।

भैरवी ।

ग्रंथोक्ततोडिकामेलो लक्ष्येऽत्र भैरवीरितः ।
अस्मान्मेलात्समुत्पन्ना भैरवी लोकविश्रुता ॥ ९४ ॥
धैवतः संमतो वादी कैश्चिन्मध्यम ईरितः ।
आरोहे चावरोहेऽपि संपूर्णा सरला मता ॥ ९५ ॥
उत्तरांगप्रधानत्वात्प्रातर्गेयत्वमीक्षितम् ।
सरिगमगरिसैः स्यात्स्वरूपं सुपरिस्फुटम् ॥ ९६ ॥
काफीमेलसमुत्पन्ना लोचनेन प्रकीर्तिता ।
तथैव हृदयेशेन वर्णितेयं स्वनिर्मितौ ॥ ९७ ॥
श्रीरागमेलने ख्याता पुंडरीकेण धीमता ।
तन्मेलजैव संप्रोक्ता विरोधे रागपूर्वके ॥ ९८ ॥
रागलक्षणकारेण भैरवी कीर्तिता स्फुटम् ।
नटभैरविमेलोत्था पुरावृत्तमितीरितम् ॥ ९९ ॥

### बिलासखानीतोडी।

भैरवीमेलसंजाता तोडी बिलासखानिका।
निर्मिता तानसेनस्य बिलासाख्येन सूनुना ॥ १०० ॥
धगसंवादसंपन्ना नित्यं संपूर्णरूपिणी।
गानं चास्याः समीचीनं द्वितीयप्रहरेऽहनि ॥ १ ॥
सरिनिसरिगरिगमगरिसस्वैर्भृशम्।
स्वरूपं स्यादभिव्यक्तं प्रायः प्रज्ञा वदन्ति ते ॥ २ ॥
आसावरी तथा तोडी मिलतोऽत्र यथायथम्।
आरोहे मनिदौर्बल्यं वैचित्र्यं चावरोहणे ॥ ३ ॥
यथान्यायं सुगीतौ चेन्मनिपावौ स्वराविह।
अवश्यं भैरवीभिन्नं रूपं तत्र समुद्भवेत् ॥ ४ ॥

### मालकोशः।

भैरवीमेलसंजातो रागो लोके गुणिप्रियः।
मालकोश इति ख्यातो रिपवर्जित औडुवः ॥ ५ ॥
मध्यमः संमतो वादी संवादी षड्ज ईरितः।
गानं तस्य समीचीनं तृतीयप्रहरे निशि ॥ ६ ॥
आलापनार्हता चास्य संमता गानवेदिनाम्।
शुद्धमध्यमवादित्वं भवेद्गांभीर्यनाचरूम् ॥ ७ ॥
मुक्तत्वं मे स्वरे नित्यं रागस्वातंत्र्यमादिशेत्।
गमधनिसनिधमस्वैरै रूपं भवेत् स्फुटम् ॥ ८ ॥
विदग्धा गायनाश्चात्र कुर्वन्ति बुद्धिपूर्वकम्।
क्वचिद्रिपप्रयोगं ते विलोमे रक्तिवृद्धये ॥ ९ ॥
तरंगिण्याह्वये ग्रंथे रागोऽयं स्यात्प्रकीर्तितः।
कर्णाटमेलने स्पष्टं तीव्रगस्वरान्वितः ॥ १० ॥
स एव रागमंजर्यां पुंडरीकविपश्चिता।
अधगः सनिकः प्रोक्तः काफीरागाख्यमेलने ॥ ११ ॥

केषुचिच्छास्त्रग्रंथेषु रागो मंगलकौशिकः ।
गौरीमेलसुसंजातः स चास्माद्भेदमर्हयेत् ॥ १२ ॥
प्राचीनग्रंथकारैर्यो हिंदोलः संप्रकीर्तितः ।
मालकोशः स एवात्र लक्ष्य इति विदां मतम् ॥ १३ ॥

टिप्पनी

भैरवी स्यात् सदा पूर्णा मालकोशोऽरिपो मतः ।
तोडी विलासखान्याख्या तोड्यंगभैरवी स्वयम् ॥ १४ ॥

तोडीमेले ।

तोडी ।

वराटीतोडिकामेलो यो ग्रंथेषु निरूपितः ।
समाहृतः स एवात्र तोडीति लक्ष्यवेदिभिः ॥ १५ ॥
अस्मान्मेलात्समुत्पन्ना रागिणी तोडिकाह्वया ।
आरोहे चावरोहे च संपूर्णा लोकविश्रुता ॥ १६ ॥
धैवतः संमतो वादी गांधारो मंत्रितुल्यकः ।
गानमस्याः समीचीनं द्वितीयप्रहरेऽहनि ॥ १७ ॥
संगतिर्धगयोरत्र भवेद्रक्तिप्रदायिनी ।
आरोहे स्याद्विपाल्पत्वं वैचित्र्यमवरोहणे ॥ १८ ॥
प्रातःकालोचितं नैव तीव्रमस्य प्रयोजनम् ।
लोके प्रतीयमानत्वात् स्वीकृतमपवादकम् ॥ १९ ॥
ग्रंथोक्ततोडिमेलोऽसौ लक्ष्ये भैरविनामकः ।
इति मया पुरैवोक्तं पुनरुक्तिर्निरर्थिका ॥ २० ॥
दरबारी तथा लक्ष्मी लाचारी च बहादुरी ।
हुसेनीनामिका तोडी तोडी विलासखानिका ॥ २१ ॥
एवं बहुविधास्तोड्यो रागांतरविमिश्रिताः ।
प्रसिद्धिं च समानीता लोके यवनगायकैः ॥ २२ ॥

गुर्जरीतोडी ।

तोडीमेलसमुत्पन्ना गुर्जरी कीर्त्यते बुधैः ।
आरोहे चावरोहेऽपि नित्यं स्यात्पविवर्जिता ॥ २३ ॥
धैवतः संमतो वादी रिगौ वा मंत्रिसंनिभः ।
गानं सुनिश्चितं तस्या द्वितीयप्रहरेऽहनि ॥ २४ ॥
मध्यतारविचित्राऽसौ मन्यते गायनैः क्वचित् ।
मते तेषां पुनस्तोडी मंद्रमध्यप्रचारिणी ॥ २५ ॥
ग्रंथेषु गुर्जरी प्रोक्ता स्पष्टं भैरवमेलने ।
रित्रिका पेन हीना साऽथवा पूर्णा प्रभातगा ॥ २६ ॥
अद्यापि गीयते चासौ संपूर्णा कुत्रचिज्जनैः ।
तोडीमेलसमुत्पन्ना न तल्लक्ष्येऽत्र संमतम् ॥ २७ ॥

मुलतानी ।

तोडीमेलसमुत्पन्ना मूलतानी निरूपिता ।
मारोहे रिधहीनाऽसौ पंचमांशा जनप्रिया ॥ २८ ॥
मगयोः संगतिश्चित्रा तयोरेव सुदोलनम् ।
भवेद्रक्तिप्रदं नित्यं तृतीयप्रहरोत्तरम् ॥ २९ ॥
आरोहे रिधहीनत्वमपराह्णत्वसूचकम् ।
प्रसिद्धो नियमो ह्येष सूरिणां पूर्ववर्तिनाम् ॥ ३० ॥
मध्याह्नार्हान् धगाल्पांस्तान् रागान् गीत्वा यथोचितम् ।
प्रवर्तते रिधत्यक्तान् गातुं गातुर्मनः स्वयम् ॥ ३१ ॥
मुलतानीगते मे तु तीव्रत्वारोपणे पुनः ।
झटित्युत्पत्स्यते तत्र पूर्वीरागस्य मेलनम् ॥ ३२ ॥
शेषयामे दिने प्रायः समपाः प्रबलाः स्मृताः ।
निरवद्यं रहस्यं तत्को न वेत्तीह मर्मवित् ॥ ३३ ॥
धन्याः खलु पंडितास्ते यैरिदं कौतुकं महत् ।
निर्मितं बुद्धिसामर्थ्यात् संततं विश्वमोहनम् ॥ ३४ ॥

निसमगपमधपमगपमगरीससाः ।
स्वैरेतैः स्वरूपं स्यान्मूलतान्याः परिस्फुटम् ॥ ३५ ॥

भावभट्टमते ।

प्रथमा शुद्धतोडी स्याद्देशीतोडी द्वितीयिका ।
बहादुरी तृतीया स्याद्गुर्जरी च चतुर्थिका ॥ ३६ ॥
छायातोडी पंचमी स्यात् षष्ठी तोडी वराटिका ।
हुसेनी सप्तमी प्रोक्ता जौनपूरी तथाष्टमी ॥
आसातोडी च नवमी नवधा कीर्तिता बुधैः ॥ ३७ ॥

टिप्पनी

तोडी लोके सदा पूर्णा गुर्जरी पंचमोज्झिता ।
मूलतान्यां रिधौनस्तः प्रारोहे गीतविन्मते ॥ ३८ ॥

वाग्गेयकारलक्षणम् ।

रत्नाकरे ।

वाङ्मातुरुच्यते गेयं धातुरित्यभिधीयते ।
वाचं गेयं च कुरुते यः स वाग्गेयकारकः ॥ ३९ ॥
शब्दानुशासनज्ञानमभिधानप्रवीणता ।
छन्दःप्रभेदवेदित्वमलंकारेषु कौशलम् ॥ ४० ॥
रसभावपरिज्ञानं देशस्थितिषु चातुरी ।
अशेषभाषाविज्ञानं कलाशास्त्रेषु कौशलम् ॥ ४१ ॥
तुर्यत्रितयचातुर्यं हृद्यशारीरशालिता ।
लयतालकलाज्ञानं विवेकोऽनेककाकुषु ॥ ४२ ॥
प्रभूतप्रतिभोद्भेदभाक्त्वं सुभगगेयता ।
देशीरागेष्वभिज्ञत्वं वाक्पटुत्वं सभाजये ॥ ४३ ॥
रागद्वेषपरित्यागः सार्द्रत्वमुचितज्ञता ।
अनुच्छिष्टोक्तिनिर्बंधो नूत्नधातुविनिर्मितिः ॥ ४४ ॥

परचित्तपरिज्ञानं प्रबंधेषु प्रगल्भता ।
द्रुतगीतविनिर्माणं पदान्तरविदग्धता ॥ ४५ ॥
त्रिस्थानगमकप्रौढिर्विविधालप्तिनैपुणम् ।
अवधानं गुणैरेभिर्वरो वाग्गेयकारकः ॥ ४६ ॥
विदधानोऽधिकं धातुं मातुमन्दस्तु मध्यमः ।
धातुमातुविद्प्रौढः प्रबंधेष्वपि मध्यमः ॥ ४७ ॥
रम्यमातुविनिर्माताऽप्यधमो मंदधातुकृत् ।
वरो वस्तुकविर्वर्णकविर्मध्यम उच्यते ।
कुट्टिकारोऽन्यधातौ तु मातुकारः प्रकीर्तितः ॥ ४८ ॥

उत्तमगायनलक्षणम् ।

हृद्यशब्दः सुशारीरो ग्रहमोक्षविचक्षणः ।
रागरागांगभाषांगक्रियांगोपांगकोविदः ॥ ४९ ॥
प्रबंधगाननिष्णातो विविधालप्तितत्त्ववित् ।
सर्वस्थानोच्चगमकेष्वनायासलसद्गतिः ॥ ५० ॥
आयत्तकंठस्तालज्ञः सावधानो जितश्रमः ।
शुद्धच्छायालगाभिज्ञः सर्वकाकुविशेषवित् ॥ ५१ ॥
अपारस्थायसंचारः सर्वदोषविवर्जितः ।
क्रियापरो व्यक्तलयः सुघटो धारणान्वितः ॥ ५२ ॥
स्फूर्जन्निर्जवनो हारिरहःकृद्भजनोद्धुरः ।
सुसंप्रदायो गीतज्ञैर्गीयते गायनाग्रणीः ॥ ५३ ॥
गुणैः कतिपयैर्हीनो निर्दोषो मध्यमो मतः ।
महामाहेश्वरेणोक्तः सदोषो गायनोऽधमः ॥ ५४ ॥
शिक्षाकारोऽनुकारश्च रसिको रंजकस्तथा ।
भावुकश्चेति गीतज्ञाः पंचधा गायनं जगुः ॥ ५५ ॥
अन्यूनशिक्षणे दक्षः शिक्षाकारो मतः सताम् ।
अनुकार इति प्रोक्तः परभंग्यनुकारकः ॥ ५६ ॥

रसाविष्टस्तुरसिको रंजकः श्रोतृरंजकः ।
गीतस्यातिशयाधानाद्भावुकः परिकीर्तितः ॥ ५७ ॥
एकलो यमलो वृंदगायनश्चेति ते त्रिधा ।
एक एव तु यो गायेद्सावेकलगायनः ॥ ५८ ॥
सद्वितीयो यमलकः सवृंदो वृंदगायनः ।
रूपयौवनशालिन्यो गायन्यो गातृविन्मताः ।
माधुर्यधुर्यध्वनयश्चतुराश्चतुरप्रियाः ॥ ५९ ॥

सदोषगायनलक्षणम् ।

संदष्टोद्घुष्टसूत्कारिभीतशंकितकम्पिताः ।
कराली विकलः काकी वितालकरभोद्भटाः ॥ ६० ॥
झोम्बकस्तुम्बकी वक्री प्रसारी विनिमीलकः ।
विरसापस्वराव्यक्तस्थानभ्रष्टाव्यवस्थिताः ॥ ६१ ॥
मिश्रकोऽनवधानश्च तथान्यः सानुनासिकः ।
पंचविंशतिरित्येते गायना निन्दिता मताः ॥ ६२ ॥

सुशारीरलक्षणम् ।

रागाभिव्यक्तिशक्तत्वमनभ्यासेऽपि यद्ध्वनेः ।
तच्छारीरमितिप्रोक्तं शरीरेण सहोद्भवात् ॥ ६३ ॥
तारानुध्वनिमाधुर्यरक्तिगांभीर्यमार्दवैः ।
घनतास्निग्धताकांतिप्राचुर्यादिगुणैर्युतम् ॥ ६४ ॥
तत्सुशारीरमित्युक्तं लक्ष्यलक्षणकोविदैः ।
अनुध्वानविहीनत्वं रूक्षत्वं त्यक्तरक्तिता ॥ ६५ ॥
निःसारता विस्वरता काकित्वं स्थानविच्युतिः ।
कार्श्यं कार्कश्यमित्याद्यैः कुशारीरं कुदूषणैः ॥ ६६ ॥

प्रस्तुतसंगीतस्थितिः ।

अस्मत्संगीतं स्वायत्तीकृतमशिक्षितैर्जनैः ।
अतोऽत्र दोषबाहुल्यं स्वभावादुपलभ्यते ॥ ६७ ॥
संगीतस्य सुशिक्षितशिक्षकाभावतोऽधुना ।
तारतम्यपरिज्ञानसाधनं नैव विद्यते ॥ ६८ ॥
साम्यक्तयाऽन्यथा वैतद्वत एवाभिमन्यते ।
संगीतं मोहिनीरूपमित्याहुः सत्यमेव तत् ॥ ६९ ॥
योग्यरसभावभाषारागप्रभृति साधनैः ।
गायकः श्रोतृमनसि नियतं जनयेत् फलम् ॥ ७० ॥
अस्मदीयेष्वाधुनिकगायकेषु समंततः ।
यथोक्तनियमान् ज्ञात्वा गायन्तो विरला जनाः ॥ ७१ ॥
भाषाऽव्यक्ता ह्यावभावाः प्रतीयन्ते विसंगताः ।
व्यस्ताश्चेष्टास्तथाऽऽक्रोशाः केवलं कर्कशा मताः ॥७२ ॥
एतादृग्गायनान्न स्यात् परिणामो ह्यभीप्सितः ।
ततो ह्यास्यरसस्यैव केवलं स्यात् समुद्भवः ॥ ७३ ॥
अर्थहीना ह्यावभावा वीररसस्य ये सदा ।
दृश्यन्ते गायने तेभ्यः कथं स्यादुत्तमं फलम् ॥ ७४ ॥
अनुसृत्यैव शब्दार्थं ध्वनेः संक्रमणं भवेत् ।
गायकास्तादृशा दृष्टाः स्वपद्यार्थं न ये विदुः ॥ ७५ ॥
कथमेते विजानीयुः रसभावरहस्यकम् ।
तथैव ते कथं विद्युः संगीतस्वरसंक्रमम् ॥ ७६ ॥
भिद्यतेऽनेकधा देशीसंगीतमिति विश्रुतम् ।
ययोः कयोरपि भवेद्ग्रंथयोर्नैकवाक्यता ॥ ७७ ॥
अत एवातिकठिनं तादृग्ग्रंथस्य लेखनम् ।
यः सर्वत्रोपयुज्येत समभावेन केवलम् ॥ ७८ ॥

नैव द्रव्यार्जनोद्देशः शंकनीयोऽत्र कश्चन ।
संगीतविद्याध्वशिक्षार्थं यत्नस्त्वेष मया कृतः ॥ ७९ ॥
नूनं पद्धत्यनुगुणशिक्षणाभ्यासतः सताम् ।
आवश्यकतया तादृग्ग्रंथापेक्षाऽपि विद्यते ॥ ८० ॥
कीदृग्ग्रंथा इष्टा इति प्रतीयेत सतां यदा ।
तदापि स्यान्मदायाससाफल्यमिति मे मतिः ॥ ८१ ॥
नूत्नशिष्याऽपेक्षयादौ स्युरिष्टा योग्यशिक्षकाः ।
अध्यापयिष्यन्ति तेऽमुं विषयं सम्यगेव हि ॥ ८२ ॥
ग्रंथस्योद्देश आदौ स्यादस्य शिक्षकनिर्मितिः ।
शिष्यानध्यापयिष्यंति तादृशाः शिक्षकास्ततः ॥ ८३ ॥
इति श्रीलक्ष्यसंगीतद्वितीयाध्याय ईरितः ।
चतुराख्येनभरतपूर्वखंडनिवासिना ॥ ८४ ॥

एवं श्रीमल्लक्ष्यसंगीतनामा
यत्नैर्नूत्नो निर्मितोऽयं प्रबंधः ।
प्राचीनार्वाचीनसंगीतभक्त-
प्रीत्यै यातः पूर्णतामत्र सद्यः ॥ ८५ ॥

शाके शशाङ्कगुणनागमहीमिताब्दे ।
मासे मधौ सितदले प्रथमेऽह्नि सोमे ।
लक्ष्याद्यकारि चतुराह्वयपंडितेन
संगीतकं भरतखंडनिवासिनेदम् ॥ ८६ ॥



# । परिशिष्टम् ।

## प्रसिद्धप्राचीनग्रंथोक्तरागवर्गीकरणानि

### रत्नाकरे,

### शुद्धादिपंचगीतिसमाश्रितत्रिंशद्ग्रामरागनामानि,

#### शुद्धायाम् ७

| | | |
|---|---|---|
| षड्जग्राम | २ मध्यमग्राम | ३ शुद्धकशिक |
| ४ शुद्धपचम | ५ शुद्धकेशिकमध्यम | ६ शुद्धसाधारित |
| | ७ शुद्धषाडव | |

#### भिन्नायाम् ५

| | | |
|---|---|---|
| १ भिन्नषड्ज | २ भिन्नपच्चम | ३ भिन्नकैशिक |
| ४ भिन्नतान | ५ भिन्नकशिकमध्यम | |

#### गाडयाम् ३

| | | |
|---|---|---|
| १ गौडकेशिक | २ गा डपचम | ३ गौडकैशिकमध्यम |

#### वेसरायाम् ८

| | | |
|---|---|---|
| १ सौवीर | २ टक | ३ बोट्ट |
| ४ मालवकैशिक | ५ टककैशिक | . हिंदाल |
| ७ मालवपच्चम | ८ वेसरषाडव | |

#### साधारण्याम् ७

| | | |
|---|---|---|
| १ रूपसाध र | २ शक | ३ भमाणपच्चम |
| ४ नर्त. | ५ गाधारपच्च. | ६ षड्जकेशिक |
| ७ कुकुभ | | |

### उपर्युक्तेषु ग्रामरागेषु ये भाषाविभाषांतरभाषाजनकाः,

| | | | | |
|---|---|---|---|---|
| १सौवीर | २ ककभ | ३ टक | ४पचम | ५भिन्नपचम |
| ६टककशिक | ७हिंदोल | ८बाट्ट | ९मालवकशिक | १०गाधारपचम |
| ११भिन्नषड्ज | १२वेसरषाडव | १३मालवपचम | १४ तान | १५पचमषाडव |

## ग्रामरागजनितभाषादिकनामानि,

### १ सौवीरे, भाषाः ४

१ सौवीरी २ वेगमध्यमा ३ साधारिता ४ गांधारी

### २ ककुभे, भाषाः ६

१ भिन्नपंचमी २ कांबोजी ३ मध्यमग्रामा ४ रगंती ५ मधुरी ६ शकमिश्रा

#### विभाषाः ३

१ भोगवर्द्धनी २ आभीरिका ३ मधकरी

#### अंतरभाषा १

१ शालवाहनिका

### ३ टक्के, भाषाः २१

| | | |
|---|---|---|
| १ त्रवणा | २ त्रवणोद्भवा | ३ वैरंजी |
| ४ मध्यमग्रामदेहा | ५ मालवकेसरी | ६ छेवाटी |
| ७ सैंधवी | ८ कोलाहला | ९ पंचमलक्षिता |
| १० सौराष्ट्री | ११ पंचमी | १२ वेगरंजी |
| १३ गांधारपंचमी | १४ मालवी | १५ तानवलिता |
| १६ ललिता | १७ रविचंद्रिका | १८ ताना |
| १९ बाहेरिका | २० दोला | २१ वेसरी |

#### विभाषाः ४

१ देवारवर्धनी २ आंध्री ३ गुर्जरी ४ भावनं

### ४ पंचमे, भाषाः १०

| | | | | |
|---|---|---|---|---|
| १ कैशिकी | २ त्रावणी | ३ तानोद्भवा | ४ आभीरी | ५ गुर्जरी |
| ६ सैधवी | ७ दाक्षिणात्या | ८ आंध्री | ९ मांगली | १० भावनी |

#### विभाषे २

१ मम्माणी २ आंधालिका

### ५ भिन्नपंचमे, भाषाः ४

१ धैवतभूषिता २ शुद्धभिन्ना ३ वराटी ४ विशाला

परिशिष्टम् ।

विभाषा १

१ कौशली

६ टक्ककैशिके, भाषे २

१ मालवा | २ भिन्नवलिता

विभाषा १

१ द्राविडी

७ हिंदोले, भाषाः ९

| | | |
|---|---|---|
| १ वेसरी | २ चूतमंजरी | ३ षड्जमध्यमा |
| ४ मधुरी | ५ भिन्नपौराली | ६ गौडी |
| ७ मालववेसरी | ८ छेवाटी | ९ पिंजरी |

८ वोट्टे, भाषाः १

१ मागली

९ मालवकैशिके, भाषाः १३

| | | | | |
|---|---|---|---|---|
| १ बंगाली | २ खंजिनी | ३ मांगली | ४ हर्षपुरी | ५ मालववेसरी |
| ६ गुर्जरी | ७ गौडी | ८ पौराली | ९ अर्धवेसरी | १० शुद्धा |
| ११ मालवरूपा | १२ सैंधवी | १३ आभीरी | | |

विभाषे २

१ कांबोजी २ देवारवर्धनी

१० गांधारपंचमे, भाषा १

१ गांधारी

११ भिन्नषड्जे, भाषाः १७

| | | |
|---|---|---|
| १ गांधारवल्ली | २ कच्छेली | ३ स्वरवल्ली |
| ४ निषादिनी | ५ त्रवणा | ६ मध्यमा |
| ७ शुद्धा | ८ दाक्षिणात्या | ९ पुलिंदिका |
| १० तुंबुरा | ११ षड्जभाषा | १२ कालिंदी |
| १३ ललिता | १४ श्रीकंठी | १५ बंगाली |
| १६ गांधारी | १७ सैंधवी | |

विभाषाः ४

१ पौराली | २ मालवा | ३ कालिंद्री | ४ देवारवर्धनी

१२ वेसरषाडवे, भाषे २

१ बाह्या | २ बाह्यषाडवा

विभाषे २

१ पार्वती | २ श्रीकंठी

१३ मालवपंचमे, भाषाः ३

१ वेदवती | २ भाविनी | ३ विभाविनी

१४ ताने, भाषा १

१ तानोद्भवा

१५ पंचमषाडवे, भाषा १

१ पोता

मतांतरं, रेवगुप्ते भाषा १

१ शका

अनुक्तजनका विभाषा १

१ पल्लवी

अंतरभाषाः ३

१ भासवलिता | २ किरणावली | ३ शकवलिता

रत्नाकरोक्तोपरागाः ८

| | | | |
|---|---|---|---|
| १ शकतिलकः | २ टक्कसैंधवः | ३ कोकिलापंचमः | ४ रेवगुप्तः |
| ५ पंचमषाडवः | ६ भावनापंचमः | ७ नागगांधारः | ८ नागपंचमः |

रागाः २०

| | | | |
|---|---|---|---|
| १ श्रीरागः | २ नट्टः | ३ बंगालः | ४ द्वितीयबंगालः |
| ५ भासः | ६ मध्यमषाडव | ७ रक्तहंसः | ८ कोल्हहासः |
| ९ प्रसवः | १० ध्वनिः | ११ भैरवः | १२ मेघरागः |
| १३ सोमः | १४ कामोदः | १५ द्वितीयकामोदः | १६ आम्रपंचमः |
| १७ कंदर्पः | १८ देशाख्यः | १९ कैशिककुकुभः | २० नट्टनारायणः |

## रागांगभाषांगक्रियांगोपांगनामानि,

### पूर्वप्रसिद्धानि रागांगानि ८

| | | | |
|---|---|---|---|
| १ शंकराभरणः | २ घंटारवः | ३ आहंसः | ४ दीपकः |
| ५ रीतिः | ६ पूर्णाटिका | ७ लाटी | ८ पल्लवी |

### भाषांगानि ११

| | | | |
|---|---|---|---|
| १ गांभीरी | २ वेहारी | ३ खशिका | ४ उत्पली |
| ५ गोल्ली | ६ नादांतरी | ७ नीलोत्पली | ८ छाया |
| ९ तरंगिणी | १० गांधारगतिः | ११ गेरंजी | |

### क्रियांगानि १२

| | | | |
|---|---|---|---|
| १ भावक्री | २ स्वभावक्री | ३ शिवक्री | ४ मरुकक्री |
| ५ त्रिनेत्रक्री | ६ कुमुदक्री | ७ दनूक्री | ८ ओजक्री |
| ९ इंद्रक्री | १० नागकृतिः | ११ धन्यकृतिः | १२ विधायक्री |

### उपांगानि ३

| | | |
|---|---|---|
| १ पूर्णाटः | २ देवालः | ३ गुरुंजिका |

## अधुनाप्रसिद्धरागांगादिकानां नामानि

### रागांगानि १३

| | | | |
|---|---|---|---|
| १ मध्यमादिः | २ मालवश्रीः | ३ तोडी | ४ बंगालः |
| ५ भैरवः | ६ वराटी | ७ गुर्जरी | ८ गौडः |
| ९ कोलाहलः | १० वसंतः | ११ धनाश्रीः | १२ देशी |
| १३ देशाख्या | | | |

### भाषांगानि ९

| | | |
|---|---|---|
| १ डोंबक्री | २ प्रथममंजरी | ३ शुद्धवाटिका |
| ४ आसावरी | ५ आन्द्रिकामोर्दी | ६ नागध्वनिः |
| ७ वेलावली | ८ नट्टा | ९ कर्णाटबंगालः |

उपांगानि २७

| | | |
|---|---|---|
| १ कुंतलवराटी | १० सौराष्ट्रगुर्जरी | १९ छायानट्टा |
| २ द्राविडीवराटी | ११ दक्षिणागुर्जरी | २० रामकृतिः |
| ३ सैधवीवराटी | १२ द्राविडीगुर्जरी | २१ वल्लातिका |
| ४ स्थानवराटी | १३ भुंच्छिका | २२ मल्लारी |
| ५ हस्तस्वरवराटी | १४ स्तंभतीर्थिका | २३ मल्लारः |
| ६ प्रतापवराटी | १५ छायावेलावली | २४ कर्णाटगौडः |
| ७ छायातोडी | १६ प्रतापवेलावली | २५ देशवालगौडः |
| ८ तुरुष्कतोडी | १७ भैरवी | २६ तुरुष्कगौडः |
| ९ महाराष्ट्रगुर्जरी | १८ सिंघलीकामोदा | २७ द्राविडगौडः |

" सर्वेषामिति रागाणां मिलितानां शतद्वयम् ।
चतुःषष्ट्यधिकं ब्रूते शार्ङ्गी श्रीकरणाग्रणीः ॥ "

रागसंख्यानिर्णय.

| | | | |
|---|---|---|---|
| ग्रामरागाः | ३० | भाषारागाः | ९६ |
| उपरागाः | ८ | विभाषारागाः | २० |
| रागाः | २० | अंतर्भाषारागाः | ४ |
| पूर्वप्रसिद्धरागांगानि | ८ | शार्ङ्गदेवसमयप्रसिद्धरागांगानि | १३ |
| —— भाषांगानि | ११ | —— भाषांगानि | ९ |
| —— क्रियांगानि | १२ | —— " —— क्रियांगानि | ३ |
| —— उपांगानि | ३ | —— " —— उपांगानि | २७ |

मिलिताः २६४ रागाः

टिप्पनी

उपरिनिर्दिष्टशार्ङ्गदेवसमयप्रसिद्धरागा दाक्षिणात्यपद्धत्याम-द्यापि तत्तन्नामभिरुपलब्धा इति विचारणीयम्

## संगीतदर्पणे,

### शिवमते, रागा ६

| | | |
|---|---|---|
| १ श्रीराग | २ वसत | ३ पचम |
| ४ मेघ | ५ भैरव | ६ बृहन्नाट |

### १ श्रीरागभार्या ६

| | | |
|---|---|---|
| १ मालवी | २ त्रिवणी | ३ गौरी |
| ४ केदारी | ५ मधुमाधवी | ९ पाहाडिका |

### २ वसतभार्या ६

| | | |
|---|---|---|
| १ वेशी | २ देवगिरी | ३ वराटी |
| ४ तोडी | ५ ललिता | ६ हिंदोली |

### ३ भैरवभार्या ६

| | | |
|---|---|---|
| १ भेरवी | २ गुर्जरी | ३ रामकिरी |
| ४ गुणकिरी | ५ बगाली | ६ सधवी |

### ४ पचमभार्या ६

| | | |
|---|---|---|
| १ विभापा | २ भूपाली | ३ कर्णाटी |
| ४ बढहासिका | ५ मालवी | ६ पटमजरी |

### ५ मेघभार्या ६

| | | |
|---|---|---|
| १ मल्लारी | २ सोरठी | ३ सावेरी |
| ४ कौशिकी | ५ गाधारी | ९ हरश्रृंगारा |

### ६ नट्टनारायणभार्या ६

| | | |
|---|---|---|
| १ कामोद्री | २ आभीरी | ३ नाटिका |
| ४ कल्याणी | ५ सारगी | ६ नट्टहबीरा |

### रागार्णवमते

#### पड्रागा

| | | |
|---|---|---|
| १ भैरव | ३ नाट | ५ गौडमाल्व |
| २ पचम | ४ मल्लार | ६ दशाख्य |

भैरवाश्रितरागाः ५

१ बंगाली  २ गुणकिरी  ३ मध्यमादिः  ४ वसंतः  ५ धनाश्री.

पंचमाश्रितरागाः ५

१ ललिता  २ गुर्जरी  ३ देशी  ४ वराडी  ५ रामकृतिः

नाटसंश्रिता रागाः ५

१ नट्टनारायणः  २ गांधारः  ३ सालगः  ४ केदारः  ५ कर्णाटकः

मल्लारसंश्रया रागाः ५

१ मेघ.  २ मल्लारी  ३ मालकौशिकः  ४ पटमंजरी  ५ आसावरी

गौडमालयाश्रितरागाः ५

१ हिंदोलः  २ त्रिवणा  ३ आधाली  ४ गौरी  ५ पठहंसिका

देशाख्याश्रिता रागाः ५

१ भूपाली  २ कुडायी  ३ कामोदी  ४ नाटिका  ५ वेळावली

## हनूमन्मते

षड्रागाः

१ भैरवः
२ कौशिकः
३ हिंदोलः
४ दीपकः
५ श्रीरागः
६ मेघः

भैरवांगनाः ५

१ मध्यमादिः  २ भैरवी  ३ बंगाली  ४ वराटी  ५ सैधवी

कौशिकांगनाः ५

१ तोडी  २ खंबावती  ३ गौरी  ४ गुणक्री  ५ कुकुभा

हिंदोलवरांगनाः ५

१ वेळावली  २ रामकिरी  ३ देशाख्या  ४ पटमंजरी  ५ ललिता

दीपकभार्याः ५

१ केदारी  २ कानडा  ३ देशी  ४ कामोदी  ५ नाटिका

श्रीरागभार्याः ५

१ वासंती  २ मालवी  ३ मालश्रीः  ४ धंनासिका  ५ आसावरी

मेघयोषितः ५

१ मल्लारी  २ देशकारी  ३ भूपाली  ४ गुर्जरी  ५ टंकी

## रागविबोधे,

### जनकमेलाः २३

| | | |
|---|---|---|
| १ मुखारी | ९ मालवगौड | १७ काबोदी |
| २ रेवगुप्ति | १० रीतिगौड | १८ मल्लारी |
| ३ सामवरालि | ११ आभीरनाट | १९ सामत |
| ४ तोडी | १२ हमीर | २० कर्णाटगौड |
| ५ नादरामक्री | १३ शुद्धवराटी | २१ दशाक्षी |
| ६ भैरव | १४ शुद्धरामक्री | २२ शुद्धनाट |
| ७ वसत | १५ श्रीराग | २३ सारग |
| ८ वसतभैरवी | १६ कल्याण | |

### जन्यराग ७६

| मेलनाम | जन्यरागा· |
|---|---|
| १ मुखारी | १ मुखारी २ तुरुष्कतोडी ( हुसेनी ) |
| २ रेवगुप्ति | १ रेवगुप्ती |
| ३ सामवरालि | १ सामवराली २ वसतवराली |
| ४ तोडी | १ तोडी |
| ५ नादरामक्री | १ नादरामक्री |
| ६ भैरव | १ भरव , २ पौरविका |
| ७ वसत | १ वसत , २ टक्क , ३ हिजेज , ४ हिंदोल |
| ८ वसतभैरवी | १ वसतभैरवी, २ मारविका |
| ९ मालवगौड | १ मालवगौड २ चैतीगौडी ३ पूर्वी ४ पाडी ५ दव गाधार ६ गौडक्रिया ७ कुरजी ८ बहुली ९ रामक्री १० पावक ११ आसावरी १२ पंचम १३ वगाल १४ शुद्धललिता १५ गुर्जरी १६ परज १७ शुद्धगौड |
| १० रीतीगौड. | १ रीतिगौड |
| ११ आभीर | १ आभीरी |
| १२ हमीर | १ हमार , २ विहगड , ३ कदार |
| १३ शुद्धवराटी | १ शुद्धवराटा |
| १४ शुद्धरामक्री | १ दशकार २ ललित ३ जेताश्री , ४ त्रिवेणी ५ देशी |
| १५ श्रीराग | १ श्राराग २ मालश्री , ३ धन्यासिका, ४ भरवी ५ धवद्या, ६ सैधवी |

| | |
|---|---|
| १६ कल्याणः | १ कल्याणः, |
| १७ कांबोदी | १ कांबोदी, २ देवक्रीः |
| १८ मल्लारी | १ मल्लारिः, २ नटमल्लारिः, ३ पूर्वगौडः, ४ भूपाली, ५ गौडः, ६ शंकराभरणः, ७ नटनारायणः, ८ नारायणगौडः, ९ द्वितीयकेदारः, १० सालंकनाटः, ११ वेलावली, १२ मध्यमादिः, १३ सावेरी, १४ सौराष्ट्री. |
| १९ सामंतः | १ सामंतः |
| २० कर्णाटः | १ कर्णाटः, २ अड्डाणः, ३ नागध्वनिः, ४ शुद्धबंगालः, ५ वर्णनाटः, ६ तुरुष्कतोडी ( ईरात इति भाषायाम् ) |
| २१ देशाक्षी | १ देशाक्षी |
| २२ शुद्धनाटः | १ शुद्धनाटः |
| २३ सारंगः | १ सारंगः |

## स्वरमेलकलानिधौ,

### जनकमेलरागाः २०

| | | | |
|---|---|---|---|
| १ मुखारी* | ६ शुद्धरामक्रिया | ११ नादरामक्री | १६ हेजुज्जिः† |
| २ मालवगौडः | ७ देशाक्षी | १२ शुद्धवराटी | १७ सामवराली |
| ३ श्रीरागः | ८ कंनडगौडः | १३ रीतिगौडः | १८ रेवगुप्तिः ‡ |
| ४ सारंगनाटः | ९ शुद्धनाटः | १४ वसंतभैरवी | १९ सामंतः |
| ५ हिंदोलः | १० अहीरी | १५ केदारगौडः | २० कांबोजी |

* " अस्मिन्मेले मुखारी च ग्रामरागाश्च केचन ।
संमतः शुद्ध इत्येष शार्ङ्गदेवविपश्चितः ॥

† " शुद्धौ च षड्जरिषभौ शुद्धाश्च मपधास्तथा ।
गांधारोऽतरसंज्ञश्च काकल्याख्यनिषादकः ॥
एतावत्स्वरसंयुक्तो हेजुज्जीमेलको भवेत् ।
हेजुज्याद्या भवंत्यत्र ग्रामरागाश्च केचन ॥
इत्येष शार्ङ्गदेवस्य संमतो मार्गवेदिनः ॥

‡ "शुद्धाः सरिमपाः शुद्धौ धनी गांधारकोंतरः ।
एतैः सप्तस्वरै रेवगुप्ति मेल उदाहृतः ॥
तस्मिन् रागो रेवगुप्तिः शुद्धरागाश्च केचन ।
रत्नाकरस्य मेलानां शार्ङ्गदेवेन लक्षितम् ॥

## अथ जन्यरागवर्गीकरणम्

| मेलनाम | |
|---|---|
| १ मुखारी | १ मुखारी |
| २ मालवगौड | १ मालवगौड, २ ललिता, ३ बहुली, ४ सौराष्ट्र, ५ गुर्जरी, ६ मेचबौळी, ७ फलमजरी, ८ गुडक्री, ९ सिंधुरामक्री, १० छायागौळ, ११ कुरजी, ११ कनडबंगाल, १३ मंगलकैशिक, १४ मलहरी |
| ३ श्रीराग | १ श्रीराग, २ भैरवी, ३ गौळी, ४ धन्यासी, ५ शुद्धभैरवी, ६ वेलावली, ७ मालवश्री, ८ शकराभरण, ९ आंधाली, १० देवगांधार, ११ मध्यमादि |
| ४ सारंगनाट | १ सारंगनाट, २ सावरी, ३ सालगभैरवी, ४ नटनारायणी, ५ शुद्धवसंत, ६ पूर्वगौड, ७ कुंतलवराळी, ८ भिन्नषड्ज, ९ नारायणी |
| ५ हिंदोल | १ हिंदोल, २ मार्गहिंदोल, ३ भूपाल |
| ६ शुद्धरामक्रिया | १ शुद्धरामक्रिया, २ बौळी, ३ आर्द्रदेशी, ४ दीपक |
| ७ देशाक्षी | १ देशाक्षी |
| ८ कनडगौळ | १ कनडगौळ २ घंटारव, ३ शुद्धबंगाल, ४ छायानाट, ५ तुरुष्कतोडी, ६ नागध्वनि, ७ देवक्रिया |
| ९ शुद्धनाट | १ शुद्धनाट |
| १० अहीरी | १ अहीरी |
| ११ नादरामक्रिया | १ नादरामक्रिया |
| १२ शुद्धवराळी | १ शुद्धवराळी |
| १३ गौळ | १ रीतिगौळ |
| १४ वसंतभैरवी | १ वसंतभैरवी, २ सामराग |
| १५ केदारगौळ | १ केदारगौड, २ नारायणगौड |
| १६ हेजुज्जी | १ हेजुज्जी |
| १७ सामवराळी | १ सामवराळी |
| १८ रेवगुप्ति | १ रेवगुप्ति |
| १९ सामंत | १ सामंत |
| २० कांबोजी | १ कांबोजी |

## चतुर्दंडीप्रकाशिकाया जनकमेलरागाः ७२

### शुद्धमध्यमयुक्ता ३६

| | | | |
|---|---|---|---|
| १ कनकांबरा | १० नटाभरण | १९ झंकारभ्रमरी | २८ केदारगौळ |
| २ फनद्युति | ११ काकिलरव | २० रीतिगौळ | २९ शंकराभरण |
| ३ सामवराळा | १२ रूपावती | २१ किरणावली | ३० नागाभरण |
| ४ भानुमती | १३ हेजुज्जी | २२ श्रीराग | ३१ कलावती |
| ५ मनोरंजनी | १४ वसंतभैरवी | २३ गौरीवेलावली | ३२ चूडामणि |
| ६ तनुकीर्ति | १५ मालवगौड | २४ वीरवसंत | ३३ गंगातरंगिणी |
| ७ सेनाग्रणी | १६ वेगवाहिनी | २५ शरावती | ३४ छायानाट |
| ८ तोडी | १७ छायावती | २६ तरंगिणी | ३५ देशाक्षी |
| ९ भिन्नषड्ज | १८ शुद्धमालवी | २७ सारसेना | ३६ चलनाट |

### तीव्रमध्यमयुक्ता ३६

| | | | |
|---|---|---|---|
| ३७ सौगंधिनी | ४६ स्तवराज | ५५ शामला | ६४ भूपावती |
| ३८ जगन्मोहन | ४७ सौवीरा | ५६ चामरा | ६५ शांतकल्याण |
| ३९ वराळिका | ४८ जीवंतिका | ५७ सोमद्युति | ६६ चतुरंगिणी |
| ४० नभोमणि | ४९ धवलांग | ५८ सिंहरव | ६७ संतानमंजरी |
| ४१ कुंभिनी | ५० नामदेशी | ५९ धामवती | ६८ ज्योति |
| ४२ रविक्रिया | ५१ रामक्रिया | ६० नैषध | ६९ धौतपंचम |
| ४३ गीर्वाणि | ५२ रमामनोहरी | ६१ कुंतल | ७० नासामणि |
| ४४ भवानी | ५३ गमकक्रिया | ६२ रतिप्रिय | ७१ कुसुमाकर |
| ४५ शैवपंतुवराळी | ५४ वंशवती | ६३ गीतप्रिय | ७२ रसमंजरि |

### एतेष्वपि लोकप्रसिद्धा मेला १९

| | | | |
|---|---|---|---|
| १ मुखारी | ६ अहीरी | ११ शंकराभरण | १६ पंतुवराळी |
| २ सामवराळी | ७ भैरवी | १२ सामंत | १७ शुद्धरामक्री |
| ३ भूपाळ | ८ श्री | १३ देशाक्षी | १८ सिंहरव |
| ४ वसंतभैरवी | ९ हेजुज्जा | १४ नाट | १९ कल्याणी |
| ५ गौळ | १० काम्भोजी | १५ शुद्धवराळी | |

## जन्यरागाः

| मेलनाम | लोकप्रियजन्यरागनामानि |
|---|---|
| १ मुखारी | १ मुखारी. |
| २ सामवराळी | १ सामवराळी. |
| ३ भूपालः | १ भूपालः; २ भिन्नषड्जः. |
| ४ वसंतभैरवी | १ वसंतभैरवी. |
| ५ गौळः | १ गौळः, २ गुंडक्रिया, ३ सालंगनाट.; ४ नादरामाक्रिया, ५ ललिता, ६ पाडी, ७ गुर्जरी, ८ बहुली, ९ मल्लहरी १० सावेरी, ११ छायागौळः, १२ पूर्वगौळः, १३ कर्णाटबंगाळः, १५ सौराष्ट्रः |
| ६ आहरी | १ आभेरी, २ हिंदोलवसंतः. |
| ७ भैरवी | १ भैरवी, २ हिंदोलः; ३ आहीरी, ४ घंटारवः, ५ रीतिगौळः. |
| ८ श्रीरागः | १ श्रीः, २ सालगभैरवी. ३ धंन्यासी, ४ मालवश्रीः, ५ देवगांधारः, ६ आंधाली, ७ वेलावली, ८ कंनडगौळः. |
| ९ हेजुज्जी | १ हेजुज्जी, २ रेवगुप्तिः. |
| १० कांभोजी | १ कांभोजी, २ केदारगौळः, ३ नारायणगौळः. |
| ११ शंकराभरणः | १ शंकराभरणः, २ आरभी. ३ नागध्वनिः, ४ सामः, ५ शुद्धवसंतः, ६ नारायणदेशाक्षी, ७ नारायणी. |
| १२ सामंतः | १ सामंतः |
| १३ देशाक्षी | १ देशाक्षी. |
| १४ नाटः | १ नाटः |
| १५ शुद्धवराळी | १ वराळी. |
| १६ पतुवराळी | १ पंतुवराळी. |
| १७ शुद्धरामक्रिया | १ शुद्धरामक्रिया. |
| १८ सिंहरवः | १ सिंहरवः |
| १९ कल्याणी | १ कल्याणः |

## संगीतसारामृते,

### ( चतुर्दंडिप्रकाशिकोक्तद्विसप्ततिमेलरचनातत्वमत्रापि संमतम् )

लोकप्रियमेलाः १९

| | | |
|---|---|---|
| १ श्रीरागः | ८ कांभोजी | १५ वसंतभैरवी |
| २ शुद्धनाटः | ९ भैरवी | १६ भिन्नषड्जः |
| ३ मालवगौडः | १० मुखारी* | १७ देशाक्षी |
| ४ वेलावली | ११ वेगवाहिनी | १८ छायानाटः |
| ५ वराळी | १२ सिंधुरामक्रिया | १९ सारंगः |
| ६ शुद्धरामक्री: | १३ हेजुज्जी | |
| ७ शंकराभरणः | १४ सामवराळी | |

* " सर्वेषु रागमेलेषु मुखारीमेल आदिमः
शुद्धैः सप्तस्वरैर्युक्तो मुखारी मेल ईरितः ॥
अस्मिन्मेले मुखारी च ग्रामरागाश्च केचन ।
लोकप्रसिद्धनामाऽयं शास्त्रसिद्धाभिधस्त्वसौ ।
शुद्धसाधारित इति तुलजेंद्रेण निश्चितः "

---

जन्यरागाः

| मेलनाम | जन्यरागाः |
|---|---|
| १ श्रीरागः | १ श्रीरागः २ कंनडगौळः, ३ देवगांधारः ४ सालगभैरवी, ५ शुद्धदेशी, ६ माधवमनोहरी, ७ मध्यमग्रामः, ८ सैंधवी, ९ हुसेनी, १० काफी. |
| | इति संपूर्णाः |
| | १ श्रीरंजनी, २ मालवश्रीः, ३ देवमनोहरी, ४ जयंतसेनः ५ मणिरंगः. |
| | इति षाडवाः |
| | १ मध्यमादिः, २ शुद्धधन्यासी. |
| | इत्यौडुवौ |
| २ शुद्धनाटः | १ शुद्धनाटः, उदयरविचंद्रिका ( टक्कभाषा ) |

| मेलनाम | जन्यरागा |
| --- | --- |
| ३ मालवगौड | १ मालवगौड , २ साल्गनाट , ३ आर्द्रदेशी, ४ छायागौळ , ५ टक्क , ६ गुर्जरी, ७ गुडक्रिया, ८ फलमञ्जरी, ९ नादरामक्री , १० सौराष्ट्री, ११ मगल्कशिक , १२ मेचबौळी, १३ मागधी, १४ गौरीमनोहरी, १५ मारुव , १६ गौळीपतु १७ मावरी, १८ पूर्वी, १९ विभास |
| | इति सपूर्णा |
| | १ गौळ , २ पाडी, ३ ललिता, ४ कनडबगाल , ५ मल्लहरी, ६ पूर्णपचम , ७ बहुली |
| | इति षाडवा |
| | १ शुद्धसावेरी, २ मघरजनी, ३ रेवगुप्ती ४ मालवी |
| | इत्यौडवा |
| ४ वेलावली | १ वेलावली ( भाषागम् ) |
| ५ वराळी | १ वराळी ( भिन्नपचमग्रामरागभाषा ) |
| ६ शुद्धरामक्रिया | १ शुद्धरामक्रिया, २ दीपक |
| ७ शंकराभरण | १ शंकराभरण , २ आरभी, ३ शुद्धवसत ४ सरस्वता मनोहरी, ५ पूर्वगौळ , ६ नारायणी, ७ नारायण देशाक्षी, ८ सामत , ९ कुरजी, १० पूर्णचद्रिका, ११ सुरसिंधु , १२ गौडमल्लार , १३ केदार , १४ बिलहरी |
| ८ काम्भोजी | १ काम्भोजी, २ नारायणगौड ३ केदारगौड ४ यथहस ५ नागध्वनि , ६ छायातरंगिणी ७ ईशमनहरा, ८ यदुकुलकाम्भोजी ९ नाटकुरजी, १० कनड |
| | इति सपूर्णा |
| | १ नम्मारायणी, २ आंधाली, २ साम , ४ मोहन , |
| | इति षाडवा |
| | १ देवक्री , २ मोहनकल्याण |
| | इत्यौडवो |
| ९ भैरवी | १ भैरवी, २ आहीरी, ३ घण्टारव , ४ इदुघण्टारव , ५ रीतिगौळ , ६ आनदभैरवी, ७ हिंदोळवसत ८ आभीरी, ९ धन्यासी, १० नागगाधारी |

| | |
|---|---|
| १० मुखारी | १ मुखारी. |
| ११ वेगवाहिनी | १ वेगवाहिनी. |
| १२ सिंधुरामक्री: | १ सिंधुरामक्रिया, २ पंतुवराळी. |
| १३ हेजुज्जी | १ हिजजी. |
| १४ सामवराळी | १ सामवराळी, २ गांधारपंचमः, ३ भिन्नपंचमः. |
| १५ वसंतभैरवी | १ वसंतभैरवी, २ ललितपंचमः. |
| १६ भिन्नषड्जः | १ भिन्नषड्जः, २ भूपाल.. |
| १७ देशाक्षी | १ देशाक्षी. |
| १८ छायानाट. | १ छायानाटः. |
| १९ सारंगः | १ सारगः |

## चत्वारिंशच्छतरागनिरूपणे पुंरागाः १०

| | | |
|---|---|---|
| १ श्रीरागः | ५ कौशिकः | ९ दीपकः |
| २ वसंतः | ६ मेघः | १० हंसकः |
| ३ पंचम | ७ नट्टनारायणः | |
| ४ भैरवः | ८ हिंदोलः | |

## भार्यापुत्रादिप्रपंचः

### १ श्रीरागपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १गौडी,२कोलाहली,३आंधाली,४द्राविडी,५मालवकौशिकी. |
| ४ कुमाराः | १ शुद्धगौटः, २ कर्नाटः, ३ मालवः, ४ पूर्विकः |
| ४ स्नुषाः | १ वराटी, २ बौडी, ३ मध्यमादिः ४ आरभी. |

### २ वसंतपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ नीलांबरी, २धनाश्रीः, ३ रामक्रीः, ४ पटमंजरी, ५ गौडक्रीः |
| ४ कुमाराः | १ सामः, २ सोमः, ३ रीतिगौळः, ४ शंकराभरणः, |
| ५ स्नुषाः | १ कल्याणी, २ दुःखवराटी, ३ सावेरी, ४ तरंगिणी. |

### ३ पंचमपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ त्रिवली, २ वल्लकी, ३ संनारावी, ४ ककुभा, ५ आहरी. |
| ४ कुमाराः | १ वल्लहंसः, २ माधारः, ३ देवहिंदोलः, ४ पावकः. |
| ४ स्नुषाः | १ नारायणी, २ भूपाळी, ३ मारू, ४ नवरोचिका. |

## ४ भैरवपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ वेलावली, २ भैरवी, ३ गुर्जरी, ४ ललिता, ५ कर्णाटी. |
| ४ कुमाराः | १ पंचवक्र:, २ कल्हारः, ३ ललितः, ४ चंद्रशेखरः. |
| ४ स्नुषाः | १ कुरंगमाली, २ वीचिका, ३ मंगलकौशिकी, ४ माहुली. |

## ५ कौशिकपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ तोडी, २ देवगांधारी, ३ देशाख्या, ४ गुणक्रिया, ५ शुद्धसावेरी. |
| ४ कुमाराः | १ विद्युन्मालः, २ कामोदः ३ सारंगः, ४ मोदकः. |
| ४ स्नुषाः | १ नट्टा, २ तरंगिणी, ३ पूर्णचंद्रिका, ४ पालिका. |

## ६ मेघपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ त्रोटकी, २ मोटकी, ३ बृहन्नटा, ४ अपरा, ५ अर्हंनटा. |
| ४ कुमाराः | १ घंटकंठः, २ कमलः, ३ घंटारवः, ४ रोहकः |
| ४ स्नुषाः | १ सुधामयी, २ ढोंवकी, ३ मृतसंजीवनी, ४ मेघरंजी. |

## ७ नटनारायणपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ बंगाली, २ शुद्धसालंका, ३ कांभोजी, ४ मधुमाधवी, ५ देवकीः. |
| ४ कुमाराः | १ शुद्धबंगालः २ नाटः, ३ गारुडः, ४ मोहनः. |
| ४ स्नुषाः | १ त्रैलंगी, २ लांगली, ३ सोरटी, ४ हंवीरी. |

## ८ हिंदोलपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ देशी, २ शिवकी, ३ ललिता, ४ मल्लारी, ५ सुहसिका. |
| ४ कुमाराः | १ रमणीयः, २ मुखारि., ३ उदयपचमः, ४ शुद्धवसतः. |
| ४ स्नुषाः | १ सिंधुरामक्रिया, २ वेगवाहिनी, ३ धरा, ४ छायातरंगिणी. |

## ९ दीपकपरिवारः

| | |
|---|---|
| ५ स्त्रियः | १ आसावरी, २ नाटिका, ३ देहली, ४ कानडा, ५ केदारी. |
| ४ कुमाराः | १ केदारगौळः, २ वैरंजी, ३ होलिः, ४ सौराष्ट्रः. |
| ४ स्नुषाः | १ कुरजमंजरी, २ नागवराली, ३ देवरंजनी, ४ सुरसिंधुः. |

## १० हसकपरिवारः

| | |
|---|---|
| ५ स्त्रिय | १ श्रीरंजनी, २ माळश्रीः, ३ सरस्वतीमनोहरी, ४ गौरी, ५ ईशमनोहरी |
| ४ कुमारा | १ नागध्वनि २ सामत., ३ भिन्नपचम. ४ टक्कः. |
| ४ स्नुषाः | १ माळश्री, २ श्यामकल्याणी, ३ देशाक्षी, ४ त्रिलहरी. |

## रागतरंगिण्याम्

### जनकसंस्थितय., १२

१ भैरवी
२ तोडी
३ गौरी
४ कर्णाट
५ कदार
६ इमन
७ सारग.
८ मघ
९ धनाश्रीः
१० पूर्वी
११ मुखारी
१२ दीपक

### जन्यरागव्यवस्था

| मेलनाम | जन्यरागा. |
|---|---|
| १ भैरवी | १ भैरवी, २ नीलाम्बरी |
| २ तोडी | २ तोडी |
| ३ गौरी | १ मालव , २ श्रीगौरी, ३ चैतीगौरी, ४ पहाडीगौरी, ५ देशीतोडी, ६ देशिकार , ७ गौर , ८ त्रिवण , ९ मूल्तानी, १० धनाश्रीः, ११ वसत , १२ रामकरी, १३ गुर्जरी, १४ वहुली, १५ रेवा, १६ भटियार , १७ पट्, १८ पंचम, १९ जयतश्रीः २० आसावरी, २१ देवगाधार , २२ सधव्यासावरी, २२ गुणकरी |
| ४ कर्णाट. | १ कानर., २ वागीश्वरीकानर , ३ खवावती, ४ सोरटः, ५ परज , ६ मारु, ७ जैजयती, ८ ककुभा, ९ कामोद् , १० कामाद्री, ११ गौर , १२ मालकौशिक., १३ हिदाल., १४ सुघाही, १५ अटाण., १६ गौरकानर , १७ श्रीराम |

| | |
|---|---|
| ५ केद्वारः | १ केदारनाटः, २ आभीरनाटः, ३ सवावती, ४ शंकराभरणः, ५ विहागरा, ६ हंब्रीरः, ७ श्यामः, ८ छायानाटः, ९ भूपाली, १० भीमपलासिका, ११ कोशिकः, १२ मारुः |
| ६ इमन. | १ इमनः, २ शुद्धकल्याणः, ३ पूरिया, ४ जयत्कल्याणः. |
| ७ सारंग. | १ सारंगः, २ पटमंजरी, ३ वृंदावनी, ४ सामंत., ५ नटहंसक. |
| ८ मेघ. | १ मेघमल्लारः, २ गौडसारंगः, ३ नाटः, ४ वेलावली, ५ अलैया, ६ सुहु, ७ देशीसुहु, ८ देशाख्यः, ९ शुद्धनाटः |
| ९ धनाश्रीः | १ धनाश्रीः, २ ललितः. |
| १० पूर्वी | १ पूर्वी. |
| ११ मुखारी | १ मुखारी |
| १२ दीपक. | १ दीपकः |

## पुंडरीकविठ्ठलकृतसद्रागचंद्रोदये ।

जनकमेला । १९ ।

१ मुखारी,
२ मालवगौड.,
३ श्रीराग',
४ शुद्धनट्ट,
५ देशाक्षिका,
६ कर्णाटगौड',
७ केदारक.,
८ हिजेज,
९ हमीर,
१० कामोद,
११ तोडी,
१२ आभीरी,
१३ शुद्धवराटी,
१४ शुद्धरामक्री,
१५ दशन्क्रिया,
१६ सारंग,
१७ कल्याण.,
१८ हिंदोल,
१९ नाट्टरामक्री,

जन्यरागाः । जन्यरागा

| मेलनाम | |
|---|---|
| १ मुखारी | १ मुखारी |
| २ मालवगौड. | १ मालव, २ गौडकृति, ३ गुर्जरी, ४ टक्कः, ५ पाडी, ६ कुरंजी, ७ वहुली, ८ पूर्वी, ९ रामक्री., १० द्राविडगौड, ११ गौडी, १२ वंगाल, १३ आसावरी, १४ पंचमः, १५ रेवगुप्ति' १६ प्रथममंजरी, १७ कर्णाटबंगाल, १८ शुद्धगौड', १९ शुद्धललित., २० देवगांधारः, २१ मारविका |
| ३ श्रीराग' | १ श्रीराग., २ मालवश्रीः, ३ धन्नासी, ४ भैरवी, ५ सैंधवी. |

| | |
|---|---|
| ४ शुद्धनट्ट | १ शुद्धनट्ट |
| ५ देशाक्षी | १ देशाक्षी |
| ६ कर्णाटगाड | १ कर्णाट, २ तुरुष्कतोडी, ३ शुद्धबंगाल, ४ आयानट ५ सामंत |
| ७ केदार | १ केदार, २ नारायणगाड, ३ वेलावली, ४ शंकराभरण, ५ नट्टनारायण, ६ मध्यमादि, ७ मल्लार, ८ गाड, ९ सालगनट्ट, १० भूपाली, ११ सावरी, १२ सौराष्ट्री, १३ कांबोजी |
| ८ हिजेज | १ हिजेज, २ भैरव |
| ९ हमीरनट्ट | १ हमीरनट्ट |
| १० कामोद | १ कामोद |
| ११ तोडी | १ तोडी |
| १२ आभारी | १ आभीरी |
| १३ शुद्धवराटी | १ शुद्धवराटी, २ सामवराटी |
| १४ शुद्धरामक्री | १ शुद्धरामक्री, २ त्रिवणी, ३ देशी, ४ ललित |
| १५ देवक्री | १ देवक्री |
| १६ सारंग | १ सारंग |
| १७ कल्याण | १ कल्याण |
| १८ हिंदोल | १ हिंदोल, २ वसंत |
| १९ नादरामक्री | १ नादरामक्री |

---

## पुंडरीकविठ्ठलविरचितरागमालायाम् ।

षड्रागा ।

१ शुद्धभैरव
२ हिंदोल
३ देशिकार
४ शुद्धनाट
५ श्रीराग
६ नटनारायण

तथा वनिता । पुत्राश्च ।

| रागनाम | |
|---|---|
| १ शुद्धभैरव | वनिता । १ धनासी २ भैरवी ३ सैधवी ४ मारवी ५ आसावरी |
| | पुत्रा । १ भैरव २ शुद्धललित ३ पञ्चम ४ परज ५ बंगाल |
| २ हिंदोल | वनिता । १ भूपाली २ मराटी ३ तोडी ४ प्रथममंजरी ५ तुरुष्कतोडी |
| | पुत्रा । १ वसंत २ शुद्धबंगाल ३ श्याम ४ सामंत ५ कामोद |
| ३ देशिकार | वनिता । १ रामक्री २ बहुली ३ देशी ४ जयतश्री ५ गुर्जरी |
| | पुत्रा । १ ललित २ विभास ३ सारंग ४ त्रिगुण ५ कल्याण |
| ४ श्रीराग | वनिता । १ गौडी २ पाडी ३ गुणक्री ४ नादरामक्री ५ गुडक्री |
| | पुत्रा । १ टक्क २ द्रवगाधार ३ मालव ४ शुद्धगौड ५ कर्णाटबंगाल |
| ५ शुद्धनाट | वनिता । १ मालवश्री २ दशाक्षा ३ देवक्री ४ मधुमाधवी ५ आहरी |
| | पुत्रा । १ जिजावंत २ सालगनाट ३ कर्णाट ४ छाया-नाट ५ हमीरनाट |
| ६ नट्टनारायण | वनिता । १ वेलावली २ कावाजा ३ सावरी ४ सुहवी ५ साराष्ट्री |
| | पुत्रा । १ मल्हार २ गौड ३ केदार ४ शंकराभरण ५ बिहागड |

## पुंडरीकविठ्ठलकृतरागमंजर्याम् ।

जनकमेला ।

१ मुखारी
२ सामराग
३ टोडी
४ गौडी
५ वराटी
६ केदार
७ शुद्धनाट
८ दशाक्षी
९ दशिकार
१० सारंग
११ आहेरी
१२ कल्याण
१३ कामोद
१४ हिजेज
१५ नादरामक्री
१६ हिंदोल
१७ कर्णाट
१८ हमीर
१९ मालवकैशिक
२० श्रीराग

जन्यरागा ।

---

| मेलरागनाम | जन्यराग |
| --- | --- |
| १ मुखारी | १ मुखारी |
| २ सामराग | २ सामराग |
| ३ टोडी | १ टोडी, २ शुद्धभैरव |
| ४ गौडी | १ गौडी २ कर्णाटबंगाल ३ गुर्जरी ४ बहुली ५ आसावरी ६ रामकली ७ मारु ८ गुणकरी ९ टक्क १० शुद्धललित ११ पंचम १२ पटमंजरी १३ मालवगौड १४ पर्जी १५ भैरवी १६ पाडी |
| ५ वराटी | १ श्यामवराटी २ शुद्धवराटी |
| ६ केदार | १ केदार २ गौड ३ मल्लार ४ नटनारायण ५ वेलावली ६ भूपाली ७ कांबोजी ८ मधुमाधवी ९ शंकराभरण १० सावेरी ११ सुहवी १२ नारायणी १३ केदारनाट |
| ७ शुद्धनाट | १ शुद्धनाट |
| ८ दशाक्षी | १ दशाक्षी |
| ९ दशिकार | १ दशिकार २ सावणी ३ देशी ४ ललित ५ दीपक ६ विभास |
| १० सारंग | १ सारंग |
| ११ आहेरी | १ आहेरी |
| १२ कल्याण | २ कल्याण |
| १३ कामोद | १ कामोद |
| १४ हिजज | १ हिजज २ भैरव |

| | |
|---|---|
| १५ नादरामक्रीः | १ नादरामक्रीः |
| १६ हिंदोलः | १ हिंदोलः २ वसंतः |
| १७ कर्णाटः | १ कर्णाटः २ सामंतः ३ सौराष्ट्री ४ छायानटः ५ शुद्धवंगालः ६ तुरुष्कतोडी |
| १८ हमीरः | १ हमीरः |
| १९ मालवकैशिकः | १ मालवकैशिकः २ मालवश्रीः ३ धन्नासी ४ सैधवी ५ देवगांधारः |
| २० श्रीरागमेलः | १ श्रीरागः |



# सूची

( ग्रंथगतरागाणाम् ).

# शुद्धिपत्र

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ८ | २२ | धमार्थ | धर्मार्थ |
| १७ | १५ | मध्यग्राम | मध्यमग्राम |
| १९ | ३ | तै | तेः |
| २१ | ७ | सर्वेवेत्सेवं | सर्वेवेत्येवं |
| २१ | १७ | निरुप्यते | निरूप्यते |
| २२ | ६ | काकळी | काकलि |
| २५ | १९ | न्सतेव | न्सतैव |
| २६ | ४ | यदि मे | यदिमे |
| २६ | १४ | पद्श्रुतेगों | पद्श्रुतिर्गो |
| ३० | ७ | काकल्यैव | काकल्यैतु |
| ३३ | १४ | यथा | तद्यथा |
| ३५ | १५ | काकलानि: | काकलीनि: |
| ४५ | ७ | उह्येस्वरा: | ऊह्येस्वरा: |
| ५७ | ५ | भेदे: | भेदैः |
| ५९ | १ | निदर्शन् | निदर्शनम् |
| ५९ | १४ | ( न: ) | ( नुः ) |
| ७१ | २ | तद्भ्यासो | तथाभ्यासो |
| ७८ | २१ | ध: | धा |
| ८६ | १० | प्रवृत | प्रवृत्त |
| ८६ | १० | प्रवृतं | प्रवृत्तं |
| ९२ | ७ | केदा: | केदारः |
| ९९ | २४ | अवरोहेन | अवरोहेण |
| १०३ | ६ | अवरोह | अवरोहे |
| १०९ | १६ | भ्देवत् | भ्दवेत् |
| ११० | ५ | कोशल्येन | कौशल्येन |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ११० | ८ | हरिणी | हारिणी |
| ११३ | २३ | वर्णयतुं | वर्णयितुं |
| १३३ | १७ | यथायथाम् | यथायथम् |
| १३५ | १० | मक्तमध्यम | मुक्तमध्यम |
| १३७ | २० | प्रातः | प्रातः |
| १३८ | ४ | प्रयोगस्तीव्र | प्रयोगस्तीव |
| १४० | १५ | पंचागनसारकः | पंचांगानुसारना |
| १४२ | ३ | से | सौ |
| १४९ | १२ | प्रदशनम् | प्रदर्शनम् |
| १५० | २३ | मधचमादि | मध्यमादि |
| १५३ | ९ | मानमस्य | गानमस्य |
| १५४ | ५ | प्रवर्धनी | प्रवार्धिनी |
| १५४ | २३ | मल्लद्मिलने | मल्लरिमेलने |
| १७४ | २१ | शुद्धनदः | शुद्धनट्टः |
| " | " | शुद्धनदः | शुद्धनट्टः |